मग्नं लग्नं हृदि मम जलैर्मर्मजैर्जातु दृष्ट्वा
ह्रोणास्त्रीणामनुगममणिः सालमृग्[1] वाञ्छते स्म ॥ १३२ ॥

काकः पाकप्रमथनसुतश्चित्रकूटे गिरीन्द्रे
मांसार्थी सन्स तदुरसिजौ स्वैर्नखैर्दारयित्वा ।
मन्तोर्ग्रस्तो मम परमसावैषिकास्त्रेण लोकान्
भ्राम्यन् कुत्रापि हि न शरणं सोऽध्वगच्छच्छरण्यम् ॥ १३३ ॥

भ्रामं भ्रामं भुवननिचये तेन विद्रावितः स-
न्नग्निज्वालाजटिलतनुना पृष्ठगेनाशुगेन ।
आगत्याथो शरणमगमन्मां वितीर्य्याक्षि चैकं
स स्वान्प्राणान् प्रभवदिषवे मित्र तस्माय रक्षत् ॥ १३४ ॥

भ्रातर्जातः खरकरकुले हन्त देदीप्यमाने
वर्णांश्चर्णान्दधदपि समं भास्वतेष्वासनेन ।
मन्ये जन्ये सहकुलममुं राक्षसं तं न हत्वा
नास्यां वा स्यां भुवि किमु सखे क्षत्रमध्ये कलङ्की ॥ १३५ ॥

चित्ते कृत्य ध्रुवमिति सखे हन्त जीवामि सोऽहं
नोचेदेवं परमपुरुषार्थं तरः सत्कृकेतुम् (?) ।
जीवातुं तां क्षणमपि विना जीवितुं वोत्सहे किं
वृत्तिर्लोके प्रभवति नृणां नामकार्य्यानुरोधात् ॥ १३६ ॥

एतस्मान्मां कुशलिनमभिज्ञानतस्त्वं विदित्वा
सर्वं चैतत्परमसुचयं धारये राजपुत्रि ।
कल्याणीयं जगति जयति श्रीमती सा हि गाथा
सद्भिर्गीता जन इति मुदं चैति जीवन् कदाचित् ॥ १३७ ॥

त्वद्वृत्तान्तं[1] सुतनु कलयन्वानराणां परार्द्धैः
सख्या भ्रात्रा सह पुनरहं तत् गत्वाऽचिरेण ।

---

1. शालमृग् इति पाठः ।

रक्षोऽधीशं सहकुलममुं मार्गणौघैरमोघै—
र्वह्निज्वालाजटिलतनुभिर्विद्धि सामीप्यमेतद्[1] ॥ १३८ ॥

आर्यस्याज्ञावलितविपिनावासरूपव्रतान्ते
गत्वाऽयोध्यामनुजजननीबन्धुवर्गैः समेत्य ।
प्रासादेषु प्रमुदितहृदो निष्कुटेषु प्रियेषु
क्रीड़ाशैलेषु च सुखतरं सुभ्रु[2] रंस्यावहे हि ॥ १३९ ॥

एवं सर्वं ललितवचनात्सामपूर्वं प्रियं मे
वाक्चातुर्यप्रवचनसुधीर्जीवनानां च दाता ।
बन्धुप्रीत्या सरसहृदयस्तद्विदेहेन्द्रपुत्र्यां[3]
तस्यां विज्ञापयतु विपरां प्राप्नुहि स्फीतकीर्त्तिम् ॥ १४० ॥

एतत्कृत्वा सुभग सुहृदैः प्रेमभारं बहन् सन्
प्रत्यागत्य द्रुततरमतिस्तत्र विज्ञाप्य सर्वम्[4] ।
तांस्तान् देशान् विचर जलमुग्यागभूम्ना समृद्धा—
नङ्कीकृत्य प्रियसहचरीं चञ्चलां संभृतश्रीः ॥ १४१ ॥

एवं रामे कथयति घने दैवयोगाद्[5] गिरीन्द्रा—
द्गामाविश्य[6] क्षणरुचिसखे याति तत्कार्यभावम्[7] ।
मेने सोऽयं करुणरसवत्प्रेमहर्षाश्रुवारां
जातैः शीतैर्भरितविकशत्पुण्डरीकेक्षणश्री ॥ १४२ ॥

भास्वद्वंशप्रभवतिलको यो बलारागवासः
सीताजीवप्रियतमतयाख्यानधीर्गीतकीर्त्तिः ।

---

1. सामीप्यमेतदिति पाठः कीटदष्टः ।
2. सुभ्रु पाठः कीटदष्टः ।
3. सरसहृदयस्त्वद्विदेहेन्द्रपुत्या इति पाठः ।
4. प्रत्यागत्य…पाठः कीटदष्टः ।
5. दैवयौगादिति पाठः कीटदष्टः ।
6. गामाविश्य इति पाठः की दष्टः ।
7. तत्कार्यभावमिति पाठः कीटदष्टः ।

य: कौशल्याप्रणिहितमति: य: सुमन्त्रावधान:[1]
राम: सोऽयं जयति खलु सत्कृत्यगानन्दकारी[2] ॥ १४३ ॥

कौशल्येशे जनक उदयद्भक्तिमुच्चैर्हरौ वा
रामामोदं न न बहुतरं दर्शनाद्वर्द्धयन्तम् ।
कौशल्याया:[3] परममस्कृद्हंसमित्रानुरागा—
द्भीमाभिख्यं जयति जगति धर्मदेवो महेन्द्र:[4] ॥ १४४ ॥

राजोत्तंसो वृषवरगतिर्भूतिराशेर्निधानं
गाङ्गेयौघस्तनुतररुचि:[5] श्रीनिवासैककान्त: ।
लोकैकेशो बुधजननुतो यो गिरावाप्तसिद्धि:
सोऽयं भूभृद्भुवि विजयते सद्गतिर्भीमदेव:[6] ॥ १४५ ॥

तुङ्गाद्गङ्गान्वयजलनिधेर्योऽजनि क्ष्मातलेन्दु:
श्रीमान्रामानुजपदगतिर्य: कलानां निधानम् ।
नक्षत्राणां ननु कुलपतिर्गोकुलामोददायी
धर्म: सोऽयं धृतकविरुचिर्यश्च राजेशमौलि:[7] ॥ १४६ ॥

पद्मामोदात्किमु न विलसच्छाययया कान्तधामा
किं च प्रायो न गुरुसखितां किं नु लोके व्यनक्ति ।
राज्ञ: किं नो विपथवलत.[8] श्रीविनाशं विधत्ते
शूरश्चात: समुदयमित: सोऽयमभ्रान्तवृत्ति:[9] । १४७ ।

भूलोकेशं जन इह परं वक्ति यं भारतोशं
वक्त्राम्भोजे वसति सुतरां यस्य सा भारतीशम् ।

---

1. कौशल्या…वधान पाठ: कीटदष्ट: ।
2. खलु…पाठ: की:दष्ट: ।
3. कौशल्याया: पाठ: कीटदष्ट: ।
4. भीमाभिख्यं पाठ: कीटदष्ट: ।
5. गाङ्गेयौघातनुतररुचि इति पाठ: ।
6. बुधजननुतो… पाठ: की:दष्ट: ।
7. सोऽयं …पाठ: कीटदष्ट: ।
8. विपथवलत: पाठ: कीटदष्ट: ।
9. सोऽयमभ्रान्तवृन्ति पाठ: कीटदष्ट: ।

रामा प्रेमा समभिलषति प्रेक्ष्य यं भारतीशं
यस्मै कामं वितरति कथा सा श्रुता भारतीशम् ॥ १४७ ॥

सुहृन्नृपा वैरिनराधिपाश्च ये
तथेतरे येऽवनिपालयाचकाः ।
महीमहेन्द्रस्य हि भूतले स्थिताः
बभूवुरस्य कटकादिभूषिताः[1] ॥ १४९ ॥

परमसुहृदयं योऽसौ शुभानि ददाति[2]
परमसुहृदयं यो वैरिभूपालपङ्क्तेः ।
परमसुहृदयं यो दुर्जनानां निकाये
परमसुहृदयं यो साधुवर्गाः विदन्ति[3] ॥ १५० ॥

मन्त्री श्रीरामचन्द्रक्षिमुडिनृपमणेर्मङ्गराजो यशोदा—
देवी यं मङ्गराजतनयमजनयद्राजनारायणं च ।
पद्मावत्याख्यदेव्याः प्रथिततनुभुवा तस्य नाम्नाब्ददूतं
कृष्णश्रीचन्दनेन प्रियमिति रचितं खण्डकाव्यं समाप्तम् ॥ १५१ ॥

इति नारायणमङ्गराजकृतौ अब्ददूताख्यं खण्डकाव्यं समाप्तम् ।

---

1. याचका…पाठः कीटदष्टः ।
2. शुभानि ददातीति पाठः कीटदष्टः ।
3. साधुवर्गाः विदन्तिति पाठः कीटदष्टः ।

## प्रथमपरिशिष्टम्

### ।। ग्रन्थपुष्पिका ।।

× × × सीञ्जातभास्वद्‌विवस्वान्
वीरः श्रीपद्मनाभो नृपकुलतिलको धर्मदेवश्च जीयात् ।
तत्साचिव्यात्प्रशस्तः कवितिलकसुहृन्मङ्गराजः कविर्य
स्तज्ज्ञश्रीचन्दनस्य प्रचरतु भुवने खण्डकाव्यं सदैतत् ।१ ।।

× × ×
यद्दोर्दण्डप्रतापौ रिपुमदहरणे प्रज्वलंश्चित्रभानुः
सद्वंशोत्तुङ्गगङ्गप्रथितकुलवलसिन्धुपीयूषभानुः ।। २ ।।

श्रीमान् सोऽभूच्छुभार्दिः खिमुडिभुवि दिवि क्ष्मापतिर्लिङ्गभानु—
स्तद्वंशे X X X नृपकुलतिलको भूमिपो धर्मदेव ।
श्रीमानासीत् स्वमूर्तिप्रियतरसुषमानिर्जिताऽनङ्गदेवः
यः स्वर्णादिप्रभूतप्रथितवितरणैस्तोषितो भीमदेवः ।। ३ ।।

शात्रुक्ष्मेशप्रतापानलकुलशमने वार्पुकोऽतीवदेवः
X X X ।। ४ ।।

वीरश्रीवलभद्रदेवनृपतियस्यात्मजो धर्मतः
साधूनां परिपालने धृतमतिर्य पण्डितेन्द्रैर्मतः ।
वीराग्रैःप्रतिपूजितोऽभवदयं यः शौर्य्यवत्कर्मतः
श्रीकृष्णाम्बुजपादपूजनविधौ तात्पर्यवाक्कर्मतः ।। ५ ।।

वीरस्तस्मादकस्मादभवदमलगुणः पूजितः श्रीलरामः
श्रीमान् वीराधिवीरो रिपुवलदलने शौर्य्यवान् पर्शुरामः ।
आसीदासीमभूमीतलमिलदतुलश्रीलकीर्त्याभिरामः
सम्राड्भीमाभिधानः स भवतु सविधे तं भजामः स्मरामः ।। ६ ।।

भूभृत्पुत्रीप्रियत्वादयमिह नृपतिः शङ्करत्वाच्च भीमः
दुर्योधानन्दहर्त्ता सततमभिमतैर्यद्बलैश्चापि भीमः ।
तस्मात्तस्माच्च धर्मः क्षितितलतिलको योऽभिघातेन भीमः
सोऽन्येषां नो कथं स्याद्विपथगतिजुषां तद्रिपूणां च भीमः ॥ ७ ॥

त्राता यस्य स्वराजप्रभुमुखविनुतो देवराजादिराजः
X ... यो धर्मराज प्रचुरवितरणे लज्जितश्चाङ्गराजः ।
विख्यातो यस्य राज्ञः प्रियसचिवतया सत्कविर्मङ्गराजः ।
श्रीधर्मक्ष्माधिराजः स जयतु नितरां X + X ॥ ८ ॥

श्रीराधावदनाम्भोज .. हरशम्भुसंनुतम्
धराधरधरं धीरं राधावररुचं नुमः ॥ ६ ॥

श्रीभीमधर्मदेवेन व्याख्यासौख्यान्मनोरमा ।
विधीयतेऽब्ददूतस्य खण्डकाव्यस्य विस्तरात् ॥ १० ।

## द्वितीयपरिशिष्टम्

॥ मनोरमा व्याख्या ॥

१। ... ... ... ... शम्भुसंनुतम्।
धराधरधरं धीरं राधाधररुचं नुमः॥
श्रीभीमधर्मदेवेन व्याख्या सोख्यान्मनोरमा।
विधीयतेऽब्ददूतस्य खण्डकाव्यस्य विस्तरात्॥

काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये कान्तासम्मिततयोपदेशयुज इत्यालङ्कारिकवचनप्रामाण्यात्काव्यस्यानेकश्रेयःसाधनता। तथा च। चतुर्वर्गफलावाप्तिःसुखादल्पधियामपि। काव्यादेव यतस्तेनेति। काव्यालापांश्च वर्जयेदिति विषय...। यथाह हरिभक्तिसुधोदये—

सकलापि कवेर्वाणी हरिनामाङ्किता यदि।
सा वाणी सफला ज्ञेया विफला त्वन्यसंश्रया॥

इति साफल्यं च।

काव्यालापाश्च ये केचिद्गीतकान्यखिलानि च।
शब्दमूर्त्तिधरस्यैते विष्णोरंशा महात्मनः॥

इति विष्णुपुराणोक्त...मेवं च। तत्काव्यमेतादृक् भवतु नाम तत्करणे किं काव्यम्। प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तते इति चेत्। अत्रोच्यते। एकः शब्दः सुप्रयुक्तः सम्यक् ज्ञातः स्वर्गे लोके च कामधुग् भवतीति वचनात्। काव्यस्य चिकीर्षुतया आव...मध्यानि मङ्गलान्तानि शास्त्राणि प्रथन्ते वीरपुरुषाण्यायुष्मत्पुरुषाणि भवन्तीति शास्त्रान्मङ्गलकरणस्यावश्यकत्वाच्चिकीर्षितार्था विघ्नपरिसमाप्तिसंप्रदायात्तदस्य प्रबन्धमुखलक्षणत्वात्। काव्यफलद्वयबीजभूतं भगवतः श्रीरघुनाथस्य अर्थदर्शनरूपमादौ रामशब्दप्रयोगपूर्वक···दिशन् कृष्णराय श्रीचन्दननामा कविः कथामापद्धिपति।....पुरत्राणात्मकभूमिदेवताको मगण आदौ प्राक...

मगणस्य श्रीपदत्वम्। उर्वी मन्त्रिगुरुः श्रियं वितनुत इति। ...पि कविकण्ठपाशे कथितः। वर्णं गणं च काव्यस्य मुखे कुर्य्यात्सुशोभनम्। सं...रनयोरेकसम्भवेदिति। प्रत्यवायपरिहारोऽपि।

देवतावाचकाः शब्दा ये च मङ्गलवाचकाः।
ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि च॥

इति। अतःस्वेष्टदेवतारूपरामशब्दप्रयोगः साधीयान् काव्य...नन्ते सत्यानन्दे चिदात्मनि इति रामपदेनासौ परंब्रह्माभिधीयते। सच्चिदानन्दस्वरूपस्य स एव रामः। रमयति रूपमस्येति तादृक्। दाशरथिः त्रिजगत्-सती-सीतातितिमोहन-सौन्दर्य्यसम्पन्न इत्यर्थः।

सुन्दरं पुरुषं दृष्ट्वा भ्रातरं यदि वा सुतम्।

....इति श्रीभगवद्वचनात् इत्यतोऽवगन्तव्यादिप्रयोगात् विश्लेषाद्धेतोः। हृदि हृदये निहितां विनिवेशितां, स्वान्तं हृन्मानसं मन इत्यमरः। अयि ते हरिणापाङ्गी रीतिरेषा जगद्बहिः। ...हृदयं गता इत्यतो हृदि स्थितिरित्यवगन्तव्यम्। प्रेयसीं अतिशयेन प्रिया प्रेयसी ताम्। राधामपि केचिदिति इयसुच् प्रत्ययः। श्रीरामस्य चित्ताकर्षणधुरीणसौन्दर्य्य गुणलक्ष्मीसन्निधिमित्यर्थः।

स्मारं स्मारं जित्यवीप्सयोरिति वीप्सा ...माणं चित्तं विषयान्तरसंचार-परिहारेण एकत्र प्रेयस्यां स्थिरीकृत्वेत्यर्थ। कामप्रहरणशतैः कामये ते सुरतेच्छा पुरा... मदनो मन्मथो मारः कामः पञ्चशरः स्मर इति च। तस्य प्रहरणशतैः प्रहरणानामायुधानां शतैः। आयुधं तु प्रहरणमिति च। पारवश्यं परवशस्य भाव पारवश्यं गुणवचनब्रह्मण ...कर्मणि चेति। परायत्त प्रपन्नः प्राप्तः। स कीदृगित्याकांक्षायामाह। एकः असहायः। विरहवेदना माकरणप्रवीण अधुरीणः कोऽपि मत्सममेवास्तीत्यभिप्रायेण एकपदप्रयोगः कृत इत्यर्थ...। माल्यवन्नामा शैलः तस्य सानौ एकदेशसमभूभागे। मध्यपदलोपिसमासपूर्वकषष्ठीसमासः। तेनात्र विशेषणसमास शङ्कनीयः। विशेषणं विशेष्येण...मिति सूत्रे विशेष्येणेत्येतावता पितृवदधीत इत्यादिवद्विशे ... नात्। यत्र परस्परविशेषणविशेष्यभावस्तत्रैव विशेषणसमो यथा स्यात्तथा...यथा रक्तलतादौ समासस्तथा मेरुमहीभृदित्यादौ न-

समासः प्राप्नोति । मेरु नामा...मेरुमहीभृदि ..शयन .. सुरुचिचपलाकान्तमब्दं ददर्श दृष्टवानिति । अङ्कं पराधयोरिति केशव. खेलन्तीं विहरमाणां सुरुचि ....अथ च तादृश्या चपलया कान्तमिति च तादृशम् । रुचिः स्त्रीदीप्तौ शोभाया-मभिष्वङ्गा मेदिनी । तडित्सौदामिनी विद्युच्चञ्चला चपला अपीत्यमरः । एतेन सुरुचेरपि चपलायाः क्रीड़ाजलदा... शोभते नान्यत्र इति.... अवगम्यते । अथ च । सुरुचिचपलया कान्तमिति चपलाया अब्ददूत्युत्पादकता व्यज्यत इति परस्परमनु-रूपतेत्यवगन्तव्यम् । अब्दं घनं ददर्शेति । अपि च । अन्ते खेलत्सुरुचिचपला-कान्तमिति पदद्वयं तन्त्रे... अभ्रकं तन्त्रमिति तद्विदः कथयन्ति । अत्रार्थे कारिका ।

सकृदुच्चारितं यत्स्यात्तदनेकोपकारकम् ।
यदि तत्तन्त्रमित्याहुः शास्त्रविज्ञा मनीषिणः ॥

इति लक्षणात् । अङ्के उत्सङ्गे क्रीड़न्ती खेलन्ती सुरुचिः शोभनकान्तिभिः चपले समासः । सुरुचिचपला तडिद्योनीत्यर्थः । तादृशी कान्ता रामा यश्च तादृशं अब्दं पुंलिङ्गं प्रयोगात्किञ्चित्पुरुषं । अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमा इतिवत् । सुरुचिचपलासाहचर्य्यादब्दस्य पुरुषत्वं गम्यते......लोके क्रीड़ासक्तकामिनोर्दर्शनेन । मेघालोके भवति सुखिनोऽप्यन्यथावृत्तिचेतः कण्ठा-श्लेषप्रणयिनि जने किं पुनर्दूरसंस्थ इत्यतः । वर्षाकालीनविद्युत्सहचरघनदर्श-नेन च । प्राणप्रियाविरहसेवनार्त्ति...नातिक्षयिता जायते तथात्रार्थः । सीता-विच्छेदवेदनातुरस्य श्रीरामचन्द्रस्य विरहवेदनोद्रेकसामञ्जस्यमुचितं भवति । अथ च । कामार्त्ताहि प्रकृतिकृपणाश्चेतनाचेतनेष्विति । अतः कामार्त्तस्य श्रीरघु-नाथस्य...नादिसकलं नियन्त्रितं भवति । यद्वा । अङ्के खेलत्सुरुचिचपलाकान्त-मित्यत्र शिष्यरूपकं व्याख्यातव्यम् । तद्यथा ।

विद्वन्मानसहंस वैरिकमलासंकोचदीप्रद्युते
दुर्गामार्ग नील... ... ... .... ... वैश्वानर ।
सत्यप्रीतिविधानदक्ष विजयप्राप्तावभीमप्रभो
सामान्यं बहुवीरवत्सरशतं ... ॥[1]

1. See Kāvyaprakasā of Mammaṭa ( Calcutta Sanskrit College Research series ) Part II P-344

इत्यत्र काव्यप्रकाशकारैर्व्याहृतम् । विद्वन्मानसहंस विद्यानां.. मानसं तन्नाम सरस्तत्पातिहंसचक्राङ्के त्यादि । प्रकृतेऽपि तथा व्याक्रियते । अर्द्धमेव समीपमेव, अर्द्धमुत्सङ्गस्तस्मिन् खेलन्ति सुरुचिर्या चपला सैव खेलन्ती सुरुचिभिः सुकान्तिभिः चपलेव विद्युदिव... ...पूर्ववत् सा कान्ता कमनीया यस्मात्तादृशं तया कान्तं सुन्दरं च अब्दं ददर्शेत्यन्वयं। अब्दशब्दे लक्षितलक्षणा अङ्गीकर्त्तव्या। अपः रसान् जलानि रसान् शृङ्गाररसान् ददातीति अब्दः रसदः.... ...रागे द्रवे रस इत्यमरः। रुचिः स्त्रीदीप्तौ शोभायामभिष्वङ्गाभिलाषयोरिति मेदिनी । लक्षित-लक्षणा यथा।

हरिद्रायां राहुप्रसरपिहितेच्छा परिषदि
प्रयुक्तालङ्क्र्ये वियुतगरुतां दुर्गकुजरीम्। (?)
वयं चार्का नीताः प्रहर... ... .... ....
.... ... लेखान् प्रथयति क्षितिपतिः ॥

.... .. इत्यत्र हरि... ...रात्रिरिति व्याख्या । तद्वत्प्रकृतेऽपीति न विरोधः। अनेन परस्पराभिरूपतनोर्दर्शनेन प्राणीभूतवैदेहीविरहवेदनातुरस्य श्रीरघुनाथस्य विच्छेदजन्यपीड़ातिशयिता याचनापूर्वकवाचिककथनादिसकलं काव्यस्य... ... सामञ्जस्याय भवेदिति कवेरभिप्रायः। अस्मिन् श्लोके द्राक्षापाकः। द्राक्षापाक स विज्ञेयो बहिरन्तः स्फुरद्रस इति लक्षणात्। शीरघुनाथस्तु अनुकूलनायकः। परस्त्रीविमुख स्वस्त्रीरक्तोऽनुकुलनायक इति रसतरङ्गिणीलक्षणात् । एतत्तु खण्ड-काव्यं भवि इति। खण्डकाव्यं भवेत्काव्यस्यैकदेशानुसारीत्यादीति काव्या-दर्शलक्षणात्। अस्मिन् काव्ये नियमेन प्रायशः वृत्त्यनुप्रासाख्याः शब्दालङ्काराः। तदुक्तं काव्यप्रकाशे —

वर्णसाम्यमनुप्रासश्छेको वृत्तिगतो द्विधा।
सोऽनेकस्य सकृत्पूर्वं एकस्याप्यसकृत्परः ॥ इति ॥

वर्णावृत्तिरनुप्रासः पादेषु च पदेषु च... ... संस्कारबोधिनी यद्यदूरता इत्यनुप्रास-मिच्छन्ति नातिदूरान्तरश्रुतं न तु रामामुखाम्भोजसदृशश्चन्द्रमा इति दण्डि-लक्षणं च। अस्मिन् काव्ये मन्दाक्रान्तावृत्तानि। मन्दाक्रान्ताजलधिषड़गैर्म्भौ नतौ ताद्गुरु चेति वृत्तरत्नाकरलक्षणात् ॥

२। श्रीरामचन्द्रदर्शनानन्तरं जलधरः किं कृतवानित्याकांक्षायां द्वाभ्यामम्भोदकृत्यं प्रपञ्चयति सोऽपीत्यादि। तस्मिन् सानौ सोऽपि...समुच्चयप्रश्नशङ्कासम्भानस्वपीत्यमरः। .. ...कुनावो वा अम्भांसि ददातीति अम्भोदः जलदोऽपि विरहानलसंतप्त... ...पयस्य सन्तापहरणचातुरी ध ... प्रतिश्रृङ्गं भ्रामं भ्रामं भ्रान्त्या अचिरात् द्रुतं क्रामं क्रामं... ....बलाका विषकण्ठिका ता एव अन्तौ रम्यौ ... ....यस्य ता... इति शब्दार्णवः। रदना दशना दन्ता इत्यमरः। तादृक् रूपकं अन्यपदार्थ बहुव्रीहिः। स्निग्धं मसृणं स्निग्धं तु मसृणे सान्द्रे इत्यमरः। स्तनितं गर्जितं वृंहितं ...स्तनितं गर्जितं मेघ...वृंहितं करिगर्जितमित्युभयत्र चामरः। अह्णाकृत ... तन्वन् विस्तारयन्। तनु विस्तारे इत्यस्माद्धातोः वर्त्तमाने शतृप्रत्ययः। किं च पृष्ठः पर्वतात् सानुकत्वात् जलभरितत्वाच्च स्थूलः गजस्तु स्वभावादेव तथा च नीलतया स्थुलतया दूरतया दानलोलुपैः मधुपैः भावितमिभराजधिया हन्तासि रदन्ततो महिष इति शिक्षाप्रयोगः। अतएव स्थिरगतिः अतिशय ... तरा गमनं यस्य तादृक ... सिद्धमेव सर्वत्र व्याप्य स्थित इत्यर्थः। विद्युता सौदामिन्या तन्त्री सौदामिनी विद्युदित्यमरः। कक्ष्यया वरत्रया दूष्या कक्ष्यावस्त्रा स्यादित्यमरः। यान्ता कक्ष्येत्यज यः षान्ताकक्षा इति विश्वप्रकाशः तद् गजबन्धनमध्यरज्वा श्लिष्टः बद्धः अमानं न विद्यते मानं परिमाणं तादृश नञ् समासः। दानं... ...इत्यमरः। नवजलभरं नूतनसलिलातिशयं अथातिशयो भर इत्यमरः। व्यस्तंरूपकम्। कान्तं कमनीयं यथा तथा अन्तर्दधान अन्तर्गतं वहन् रूपकालङ्कारः। उपमैव तिरोभूत... ...इति लक्षणात्... ...॥

३। ... गत्य विचचार इत्याकांक्षायां प्रथमश्लोके रूपकेन ... ...धर्मान् अवयित्वा द्वितीयश्लोके तान् प्रकटयति। भ्राममिति। रघुनाथः काकुस्थः कुवलयरुचिः कु. पृथ्वी गोत्राकुः पृथिवी पृथ्वीत्यमरः। सा वलयमिव वलयं तमिव उपमितसमासः कुवलयं भूमण्डलं तं ... .. इति मेदिनी। .. लक्षणया भूमण्डलस्थानां जनानां रुचिरिति व्याख्या। लक्षणालक्षणं तु चिन्तामणौ ... .... इत्युक्तं .... जने आधाराधेयसम्बन्धमित्यवगन्तव्यम्। अतएव भूभृतां पर्वतानां श्रीभराणां शोभातिशायिनां .. ...लोके यस्मिन् जने यस्य प्रीतिर्भवति तद्भृतां विषये प्रीतिं वर्द्धयति लक्ष्मीं च ददाति। तथा प्रकृतेऽपि किं च अनुक्त...

पद्मिनीनायकानां न तनवः अतनवः अनन्या ये रसाः जलानि तैर्लसन्त्यः कमनीयाः पद्मिन्यः जलाशयाः ता एव नायिकाः युवतयः तासां पाता पानकारी

नायकश्च। कर्मणि षष्ठी। तनु काये त्वचि स्त्री स्यात्त्रि॒ तल्पे विरले कृशे इति मेदिनी। शृङ्गारा... ...नलिनी स्यात्पङ्कजिनी विसिनी च सरोजिनी। पद्मा-पति च पर्य्यायाः पद्मखण्डे तदाकरे इति रत्नमालायां माधवः। किं च सुमनसां मोददायी सुमनसां मालतीनां सुमना मालती जातीत्यमरः। मोदं हर्षं विकसन्त-मिति यावत् तं दातुं शीलमस्य तादृक् एवं विशेषणविशिष्टः... ... सहार्थे तृतीया। व्यचरतीत्यन्वयः। यत्र यत्र अम्भोदः व्यचरत्तत्र तत्र श्रीरघुनाथस्य दृष्टिर्लग्नै-र्विचचारेत्यर्थः गजराजपक्षे... ....यस्तावदन्ये.... .. भूभृतां श्रीवितरणध्वनिः पूर्व-वदूहनीयः। अतएव भूभृतां रक्षां श्रीभराणां ... ...लक्षणया भूमण्डलस्थाना जनानां रुचिरिति व्याख्या। लक्षणालक्षणं तु चिन्तामणौ इत्युक्तं... .. पद्मिन्यः हस्तिन्यः तत्स्वरूपा नायिका तासां पाता रक्षिता कन्दर्पजन्यसन्तापनाशकत्वेन यथाधिपत्येन ...॥

४ .. . रामचन्द्रस्य... ...सञ्चारानन्तरं किमभूदित्याकांक्षायामाह। दृष्टेरिति। वियोगी वियोगः प्रियाविरहः अस्यास्तीति तादृक् रामचन्द्र... ...भुवनसुखदे भुवनानां जनानां सुखदे सौख्यप्रदे .. सलीले गमने इति मेदिनी। यदपि प्रोषितानां प्रवसतां कीनाशे यमकल्पेऽस्मिन् परिदृश्यमाने जलधरे नवीनघने दृष्टे सती दर्शनातिथ्यमायाते सती श्रीरामस्य घनदर्शनसमय इत्यर्थः। हा कष्टमिति उक्त्वा स्मरपरवशः स्मरस्य कामस्य परवशः .. . र्थे तृतीया पूर्ववत् पूर्ववर्षासु पूर्वानुभूतवर्षाकालेषु केलीः क्रीड़ाः ध्यायं ध्यायं ध्यात्वा ध्यात्वा वीप्सायां द्विभावः। विषयान्तरसञ्चारपरिहारेण पूर्वानुभूतप्रियाकेलिषु चित्तस्थिरीकृत्वेत्यर्थः भुवनसुखदस्य तन्मध्यस्थितप्रवासिनां वगन्तव्यं तद्भिन्नत्वे सति तद्गतभूयो धर्मवत्वं सादृश्यम्। यमभिन्नो घन ... ...विरहिसन्ताप ... भयङ्करस्य यमवत् घनस्य दर्शनात्। वियोगिनः एकाकिनः जनस्य मोहचित्त इति ध्वन्यते॥

५। चेतनामोचनानन्तरकृत्यं प्रकटयति। स इति प्रियाकेलिस्मरणजन्यसन्ताप-मूर्च्छितः रघुकुलपतिः रघुनाथः हा कष्टं मुहूर्त्तात् चेतनां लब्ध्वा प्राप्य हे प्रणयिनि प्रणयः भक्तिश्रद्धादिभिः प्रीति सौजन्यमित्यमरसिंहः। सः अस्या अस्तीति प्रणयिनी तस्याः सम्बुद्धौ प्रणयप्रश्रयौ समावित्यमरः। हे प्रेमशालिनि हे सीते! क्वासि क्व गतासि भवसि अस्मि अहं हतोऽस्मि मृतप्रायोऽस्मि अहमन्या-भिधायि अस्मिपदमव्ययं त्वत्सङ्गमाभावादिति शेष.। इत्थमनेन प्रकारेण उक्त्वा

आलप्य चकितनयन: चञ्चलनेत्र: सन् सर्वा आशा: प्रेक्ष्य च प्रकृष्टेन दृष्ट्वा चेत्यर्थ: । चिन्तान्तरे (?) परिणामादिना चिन्तीय स्थास्यतीति दृष्ट्वेत्यर्थे प्रश.... ... प्रयोग: । सन्यस्ताश: सन्यस्ता त्यक्ता आशा प्रियादर्शनप्रत्याशा यस्य तादृक् किं च कलितविरति: कलिता वर्द्धिता विरति वैराग्यं यस्मिन् तादृक् ......तकपरम्परा: मुमोच मुञ्चति स्म ॥

६ । उत्थायेति । अथो वारिधारमोचनानन्तरं कथमपि गरीयसा यत्नेन ज्ञातहेतु विवक्षाया... कथमव्ययम् । कथमादि तथाप्यन्तं यत्न... पृष्ठा गतिनिवृत्ता-वित्यस्माद्धातो: ऋत्पूर्वात् क्त्वास्थाने.... .. लोप । तदा तस्मिन् काले मन्दं मन्दं अतिमन्दं धृति: धैर्य्यं उपगत: प्राप्त: सन् अश्रुवारं लोतक.. पुण्डरीकायताक्ष: पुण्डरीके इव शीताम्भोजे इव आयते दीर्घे अक्षिणी यस्य तादृक् पुण्डरीकं सिता-म्भोजमित्यमर: । चित्रार्पित इव चित्रे आलेख्ये अर्पित इव दत्त इव स्थित: स: पश्यन्नालोकेन निश्चितयानिमेषं बहुकालं प्रेक्षन्नित्यर्थ: । पुन: श्रृङ्गे पर्वतसानौ चरन्तं विद्युन्मालारुचिरं विद्युत् मालेव स्रगिव उपमितसमास: । तया रुचिरं मनोहरं वारिदं इति वक्ष्यमाणक्रमेण उवाच उक्तवांश्च । अचिरं द्रुतं औत्सु-क्यादितिभाव: । एतेन नवमदशाभिरुढ़स्य श्रीरामचन्द्रस्य पारवश्यादेव भूरूपशा-य्यायां .. ....निपतिततनुयष्टिकत्वात् मदं मन्दं धैर्य्यमवलम्ब्य अश्रूणि प्रमृज्य कथमप्युत्थाय वारिदमित्युवाचेति श्लोकार्थ: । पदार्थहेतुक काव्यलिङ्गमलङ्कार: । हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतमितिलक्षणात् ॥

७ । यस्मानिति । हे जलद सलिलदायक त्वं विचरणशाली याचक···मम प्रार्थनाभङ्गं न करिष्यसीति सूचयितुमित्युक्तमित्यवगन्तव्यम् । यस्मात् कारणात् स्वंनीलोत्पलदलरुचि: नीलोत्पलानां नीलेन्दीवराणां यानि दलानि तेषां रुचिरिव रुचियस्य तादृक्... ...यथा तथा दधान बिभ्राण: तत्तस्मादहं मम मित्रं सुहृदसि अथ मित्रं सखा सुहृदित्यमर: । अथ प्राणतुल्य: असुसम: प्रिय: । यद् यस्मात् पुष्कलेन रलयोरैक्यात् पुष्करेण अन्वयेन वंशेन ते तव जातं जन्म प्रसितं प्रसिद्धं सत् कान्तं मे मया बुद्धं मे ज्ञातमिति कर्मणि सान्त्वयेत्यर्थे मयेत्यर्थे च .. ... तृतीया चेति सप्तम्यां तृतीया । आवर्त्त पुष्करे तव जन्म ख्यातम् । मया ज्ञातमित्यर्थ: । अतस्त्वं कुली न: महान् मम याचनाभङ्गं न करिष्यसीति भाव: ।

श्रीरामपक्षे यस्मात् नीलोत्पलदलरुचिः माल्यवच्छैलचारी विशेषणद्वयमुभयोः समानं, हे सुरवर देव कोदण्डं काण्डषडं बाणनिकरं उच्चैर्यथा तथा ... तथा यथा भवानिति शेषः। तथा अहमपि काण्डोऽस्त्रीदण्डबाणवर्गसविरवारिष्वित्यमरः। किं च तस्मात् मित्रमसि मे मम जातं जन्म इह लोके प्रसिद्धं सत् पुष्कलेन लक्ष्मीवता इनस्य सूर्य्यस्य अन्वयेन ज्ञातं विदितं लोकैरिति शेषः। पुष्कलेनान्वयेनेत्येकं पदं लक्ष्मीपति... .. सूर्य्यवंशे मम जन्म ख्यातम्। ... ... समस्तुल्यः सदृश सदृक्। श्रेयान् श्रेष्ठ. पुष्कलःस्यादिति चामर ॥

८। एवमावयो साहश्यमन्यदस्तीति तदेव विषद्यति। किं चेति। हे भ्रातः स्नेहद्योतकपदमेतत्। हे भ्रातः हे सखे उत्कलदेशभाषानुसारेण मित्रादीन् प्रायशः भ्रातेति वदन्तीति अवगन्तव्यम्। किं च वियोगः प्रियाविरहः प्रायशः.... .. न मयि विजयते इतरविरहिस्थितेः सर्वोत्कर्षेण वर्त्तते विपराभ्यां जेरिति आत्मनेपदम्। एष वियोगः प्रियाविच्छेदः। इति विरोधः वीनां चातकमयूरादीनां पक्षिणां योग इत्यविरोधः। त्वय्यपि भवत्यपि प्रभव ... ....समर्थो भवेदेव। यथा मयि वियोगात्मसाम्यत्वं त्व तथा भवसीति अपरर्थः। एतद्वाक्यार्थः कर्मतत्वं सत्यं व .... र्णना तामकलयतां प्रार्थनायां लोट्। वाग् भूम्ना वाचा वचनानां भूम्ना वाहुल्यं तेन अलं पर्य्याप्त .. ....पर्य्याप्तं शक्तिवाचकमित्यमरः। अहं यथा न भोगः न विद्यन्ते भोगाः यस्मिन् तादृगासा...न तथा त्वं यासि न ...वियति गच्छतीति ·· ... ...विरोधः इति ...न धर्मणोः नो आवयोः योगे मेलने विधिरेव हेतुः कारण भवति। हेतुर्नाकारणं वीजमित्यमरः। विधिना कृतोऽयं योगः। सन्तप्तस्य मम सन्तापनाशकस्य भवतः मेलनं जातमित्यर्थः। अतः भवतः सयत्कार्य्यस्य भविष्यतीति भावः। भोजः स्त्र्यादिभूतावहेश्च फणकाययोः इति मेदिनी। स्त्र्यादिभूतयस्तु

सुगन्धं वनितावस्त्रं गीतं ताम्बूलभोजने।
शय्या च भूषणं चैव अष्टौ भोगा प्रकीर्त्तिताः ॥

भाग्यं स्त्रीनियतिर्विधिरित्यमरः। तद्भिन्नत्वे सती तद्गतभूत्ये धर्मवत्वं साहश्यं तद्भिन्नः श्रीरामचन्द्राद्भिन्नः घनः तद्गतभूयो धर्माः वियोगिन भोगादिधर्माः घने विद्यमानत्वात् साहश्यं समञ्जसमित्यवगन्तव्यम्। प्रकृतयो श्रीरामघनयोः श्लेषणात् प्रकृत... ... ... ॥

९ । एतेन सादृश्येन आवयोर्मैत्रीकरणस्यौचित्यात् मैत्रीकरणमावश्यकम् । तदनन्तरं किं कार्यमित्याकांक्षायामाह । अस्मादिति । हे जलद अस्मादेतेभ्यो हेतुभ्य ... अभीष्टः त्वमसि नो मैत्री सिद्धा यतः मम शुभाशुभानि भवदधीनानि जातानि । प्रायः न विद्यते शुभं शुभकार्यकरणधुरन्धरः यस्य तादृक् अहं शरण्यं शरणे साधु ... .. । सकृत् बहुवारं भवान् शरणं गतश्चेत्तव किं कर्म करोमीत्याकांक्षाया माह । दैवादिति । भोः हे सखे मयि प्रसीद प्रसीद त्वरायां द्विरुक्तिः । प्रसादं कुरु । दैवात् प्राक् न शुभाशुभकर्म । दैवः देवः परमेश्वरः तत्र भवं युवादूयण् दैवं दिष्टं भागधेयं भाग्यं स्त्रीनियतिर्विधिरित्यमरः । रक्षोऽधिपगृहगतां राक्षसपतिसदनं प्राप्तां महाराजकन्या महाराजवधूः महावीरस्य तव कान्ता कथं राक्षससद्म गता भवेदिति आशङ्कायां सत्यं दैवात् रावणमरणकारणभूतप्राक्तनकर्मतः तद्गृहगतेति... ...क्व जनकतनया क्व रामभार्या क्व च रजनीचरमन्दिरे निवासः । अयं खलु विषमः पुराकृतानां भवति जन्तुषु कर्मणा विपाक इत्यतोऽवगन्तव्यम् । इष्टापत्तिरिति चेत्तत्राह । प्रेयसीं अतिशयेन प्रिया प्रेयसी तादृशीं महिषीमिति यावत् प्रारब्धपरित्याज्येत्यर्थः । तर्हि परपुरुष .. ...तन्त्रा ... ... निष्प्रयोजनत्वादिति... तत्राह... हर्त्ता दैवमिव कमनीयोऽस्या इति तादृशी पतिव्रतेत्यर्थः । तां च मम सन्देशं नय प्रापय नयने द्विकर्मकत्वाद्विकर्मता ॥

१० । मित्रस्य भवतः प्रार्थनया अकार्यमपि करोमि किन्तु तत्कार्यधुरन्धरता मम भविष्यति ·· ···संशयं मा कार्या इत्यत्राह । आकाश इति । हे भुवनमहित भुवनपदं तन्त्रेणोपात्तं भुवने जगति भुवनैर्जनैर्महितः पूजितः तादृक् तस्य सम्बुद्धौ । एतेन सन्तप्तस्य शान्तिकारणशक्तिरस्तीति तस्य ते आकाशे नभसि अविहतगतिं न विहता अविहता ते बन्धोगतिर्गमनं यस्य तादृश अपि च दूरगं दूरं गच्छतीति दूरगः तादृश कामरूपं काममित्यनुरूपं यस्य तादृशं कामं पुंसि स्मरेच्छयोरिति मेदिनी । भुवनं पिष्टपेऽपि... ...जने इति च यत्र .. तत्र .... द्रुतकारणचातुरीधुरिण इत्यर्थः ।... ...श्रेष्ठः अथ सर्वधर्मार्थविज्ञं सकलधर्मप्रयोजन ... ...त्वां जानामि कलयामि । तस्माद्धेतोः... ···अर्थी याचकश्च त्वां हि एतद्गुणविशेषणविशिष्टं भवन्तमेव .. ...कोऽपि नास्तीत्यर्थः । काममभिलाषं याचे याचनां कुर्वे ।... सन्तप्ते संज्वरवत् सन्तापः संज्वरः समानित्यमरः । अस्मिन् . ....ने मयीत्यर्थः । सख्यतः मित्रभावात् अनुग्रहाय प्रसादाय तुमर्थाच्च भाववचनाच्चेति चतुर्थी । प्रसादं कर्त्तुं भवान् त्वं प्रभवतु समर्थो भवेदित्यर्थः

भवच्छब्दयोगान्मध्यमपुरुषार्थे प्रथमपुरुषः। विधिनिमन्त्रणेति प्रार्थनायां… … काव्यलिङ्गमलङ्कारः। हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतमिति लक्षणात्॥

११। पूर्वश्लोके भक्त देवेत्युक्तमिदानीं स्वस्मिन् प्रियतमाया अनुरागं वर्णयति। सीतेति। सीता जानकी वसतिं… …नीता प्रापिता .. .. या वसतिं नीता सा तदधीना भवति इयं तु न तथेत्यर्थे यद्यप्युक्तामित्यवगन्तव्यम्। तद्रक्षः तं राक्षसं तृणीकृत्य तृणप्रायं कृत्वेत्यर्थः। अतृणं तृणं करोतीति तृणीकरोति अभूततद्भावेच्वि… … कान्ता या मनोरमा स्वान्ता .. चरणविनिहितां वियोगाद्धेतोः हृदि स्थापितामित्यर्थः। मां हि मामेव नान्यं तं राक्षसमित्यर्थः। रक्ततानुरागवती सती … … भजेत् .. लोके स्वभुवने जन इत्यमरः। तस्मिन् दैवतः दैवात् पञ्चम्यास्तसिल्। सुचिरं सुतरां सुचिरं बहुकालं रुद्धा आवृता यद्यपि .. रानुसारेण प्रीत्या प्रमदेन .. …त्यर्थः। राजहंसाश्च… …. चञ्चुचरणे लौहित्ये हंसस्य वरटेति चामरः। तं काकलोकं भजति किं … मोदते किं नेत्यर्थः। राजहंस ……नियमत्वेन पदचतुष्टये वृत्त्यनुप्रासाख्या-शब्दालङ्कार। अर्थान्तरन्यासोऽलङ्कारः॥

१२। भवतु .. सन्देशं न… …प्रपञ्चयति। धात्रीपुत्रीत्यादि। .. पञ्चश्लोकैः। इति उक्त्वा … … कलयन्ति। … .. तनया भूपुत्री जीवितं जीवनं धारयन्तीं बिभ्रतीं स्यादिति शेषः। अस्मद् .. त्मनाऽपि निष्पा…. --भिप्रायविभाषणम्। यथा भूः सर्वंसहा तत्पुत्रीत्वादियमपि क्लेशं सहिष्यत इत्यर्थः। वितरवितरवाचिक — . मुग्धे किमेतद् विरमतु परिहासः …मजोऽहमिति प्रयोगश्च। इत्युक्तप्रकारेणेत्युक्तं केन प्रकारेणेत्याकांक्षायामाह। धात्रीति। धात्रीपुत्र्याः धात्र्याः धरण्याः पुत्री सुता जानकी निमिनृपमुनेः निमिश्चासौ .. … सहायः सहान् इत्यमरः। सतीनां सीमन्तिनीनां साध्वीनां धुरि अग्रे बुधजनैः बुधा एव जनाः तैर्कीर्त्तनीया गणनीया अतएव . ….न विद्यते तुला… .. अतुलबला तैः बलप्रसिद्धं चण्डमुद्दीप्तं यत् कोदण्डं धनुः तस्य भङ्गं द्विधाकरणं प्रबलसबलक्ष्मापलक्षस्य .. .. ते प्रबलाः बलेन चतुरङ्गबलेन…. ….लक्षं च स भङ्गं पराजयं च तद्वदिति यद्वद्धनुर्भङ्गस्तव नृपभङ्ग इत्यर्थः पश्यन्तीत्यन्वयः॥

१३।　　पूर्वमिति। पूर्वं जानकीविवाहात्पूर्वं असौ... ...नागायुतबलवतीं नागानामिभानामयुत ... ... स्रीति पश्चात्समासः कर्त्तव्यः। ...ताड़केति आख्या नाम यस्याः तादृशों आख्याह्वेऽभिधानं चेत्यमरः। चन्द्रार्द्धेन चन्द्रस्यार्द्धं तेन चन्द्रार्द्धकृतिना प्रवहद्विपुणा प्रनष्टं न भवतीति प्रभवत् क्विप् प्रभवः चासौ इषुश्चेति तेन .. शोणिताक्तां शोणितै रक्तैराक्तां .. तादृशां तरस्वी त्वरितो वेगीप्रजवीजवनोजव इत्यमर.। मारीचं मारीचनामानं राक्षसं तं ·· राक्षसं प्रसिद्धप्रक्रान्तानुभूतेषु तच्छब्दो यच्छब्दो नापेक्षेते मे मम मानवास्त्रेण योजनशतं अचिरा... . लोकात् शृण्वतीत्यन्ययः।

१४।　　आग्न इति। तत्र प्रसिद्धे सिद्धाश्रमान्ते सिद्धाश्रममध्ये अ... .... मस्तीति . ...तादृग्भि बन्धुवर्गैः बन्धूनां　　रावातेन मरणेन च सर्गमनुलक्षीकृत्य प्राप्तान् द्वाविमौ... रणे चारिमुखो हत इति वचनात्। परानन्यान् लोकात् जनमुखात् शृण्वनीत्यन्वयः॥

१५। रक्ष इति। तदनन्तरं रक्षोऽधीशं रक्षसां राक्षसानां अधीशं प्रबलं प्रकृष्टं बलं वीर्य्यं यस्य तादृशं अतुलं न विद्यते तुला साम्यं यस्य बन्धव बान्धवा मित्राणि सुहृदश्च कर्मधारयस्तैर्युक्तं संयुतं तं प्रसिद्धं त्रिशिरसं त्रीणि शिरांसि यस्य तादृशं तं नामानं च भीषणं भीषयतीति भीषण. भयङ्करः तादृशं च दूषणं तन्नामानं च चकारः समुच्चयार्थः जनस्थानवासः जनस्थानवास दण्डकारण्यैकदेशस्तत्र ... भुवि युद्धभूमौ हतम्। क्वचिन्निलीय हतवान् वेति शङ्कानिरासार्थमेतद्विशेषणम्। साक्षात् प्रत्यक्षं अग्रे पुरतः पश्यन्ती विलोकयन्ती सा मत्प्रियेति शेषः। हे प्रियसख इष्टमित्र गिरां वचनानां भूम्ना किं किं कार्य्यं स्यादित्यन्वयः॥ १५॥

१६।　　जानानासाविति।....　कुलकादेव कृता।

१७।　　..　प्रियां राक्षसः हृतवानित्याशङ्कायां स्वेष्टपूर्ववृत्तान्तं प्रपञ्चयति वीरमिति। हे प्रियसख प्रियाश्चासौ सखा चेति राजाहः सखिभ्यः षृजिति ष्टच् प्रत्ययः। .... ...राक्षसः कौणपः क्रव्यादित्यमरः। वीरं वीरं शत्रुमारणसामर्थ्यं शौर्य्यं धुरन्धरं अवीरज्ञाने दूरनयनासम्भवात्। स वीरो यस्य वै वीर्यमरिणा

युधि वर्ण्यते। यथा मुक्ताफलाय करिणं हरिणं पलाय सिंहं निहन्ति भुजविक्रमसूचनाय का नीति रघुवंशवीर शाखामृगे जयति यत्तव बाणमोक्ष इति महावीरस्य वालिनः उक्ते अतएव तादृशं किं च धीरं शास्त्रद्वारा कालत्रयाभिज्ञं धीरो मनीषी ज्ञः प्राज्ञ इत्यमरः। अधीरस्य प्रतारणा नाधिक्यात्। एतादृशमपीति अपैरध्याहारः। एतादृशगुणद्वयसम्पन्नस्य भवतः तां तां राक्षसः कथमहार्षीदित्याशङ्कायामाह।... विधिवशगतं विधेः दुर्दैवस्य वशमायत्ततां गतं प्राप्तं दुर्दैवपारतन्त्रं गतस्तादृशं विधिविधाने दैवे च। वश आयत्ततां याचेत्यमरः(?)। दैव पारतन्त्र्यं प्राप्तमित्यर्थं। दैवाधीनस्य सर्वगुणधुरीणता नैरर्थक्यादिति भावः। तथा च -

प्रतिकूलतामुपगते हि विधौ
विफलत्वमेति बहुसाधनता।
अवलम्बनाय दिनभर्त्तुरभू—
न्निपतिष्यतः करसहस्रमपि॥ इति भावः

मां कितवगुरुणा मायया ... ...चरेण। मायान्यमायिना बुधवचनयोगात् गुरुणेत्येकमित्यवगन्तव्यम्। हेमधाम्ना हेमकल्पं धाम दे.... .. मध्यपदलोपी समासः। धाम देहे गृहे रश्मौ इत्यमरः। तादृशमृगेण मृगरूपेण मारीचेनेत्यर्थः। तदैव करणभूतेन वञ्चयित्वा... वारयित्वा दूरं दूरदेशं नीत्वा प्रापयित्वा सौमित्रिस्तदा क्व गत इत्याकाङ्क्षायामाह... ...सुमित्राया अपत्यं पुमान् सौमित्रिः लक्ष्मणः तं च चकारात् मत्समानधर्मसम्पन्नं दैवाधीनं चेत्यर्थः। केनचिद्भाषितेन लक्ष्मण त्राहीति मम समरवरवचनेन वञ्चयित्वा दूरं नीत्वा प्रणयकुशलां प्रणये प्रेम्णि कुशलानां चतुराणां मम प्राणमया द्राक् झटिति अतएव एकां असहायां जहार हृतवान् हृञ् हरणे इत्यस्माद्धातोः लिट्। प्रणयकुशलामिति विधेयविशेषणम् एतेन श्रीरघुनाथस्य सीतायां प्रेमोद्रेकः सूचितः। विलम्बे सति रघुनाथस्य प्रत्यागमने मम प्राणा न स्थास्यन्तीति भीत्या शीघ्रं जहारेति ·· एतत्सकलं मनसाकलय्य शीघ्रं मम दूत्यं कुर्विति भावः॥

१८। स जहार चेद्भवता कोऽपि... ...न कृतं किमित्याशङ्कायामाह नीत्वेति। हे सखे प्रणयकुशलां प्रणये प्रेम्णि कुशलां प्रवीणां मम प्रियां नीत्वा स

दुष्टः राक्षस. कुत्र स्थापयामास निदधौ। अथ प्रियानयनानन्तरं तस्य पुनः आवासः स्वावासः मन्दिरं क्व कुत्र . इत्थमितिशेषः तद्द्वयमपि यस्मात्कारणात् न जानामि न कलयामि। यस्मात् कारणात् अस्मिन् मित्ररूपे त्वयि याचकत्वं अर्थित्वं मार्गणे याचकार्थिनावित्यमरः। हे सहजसुभग सहजेन स्वभावेन सु शोभनः भगो महात्म्यं यस्य तादृक् सुभगः तस्य सम्बुद्धौ। आपन्नः आपदं प्राप्त आपन्नः तादृशि मयि प्रसादं अनुग्रहं कुरुष्व। भगः श्रीकाममाहात्म्य वीर्ययत्नार्क-कीर्त्तिषु इति विश्व। प्रसादोऽनुग्रहे काम्य इत्यमरः प्राप्तकाले लोट्। जने महतां आपन्न प्रसादकरणे प्राप्त इत्यथः। काव्यलिङ्गमलङ्कारः॥

१६ विजानीया चेदिति दुर्गमस्थानादौ स्थास्यति यदि तदा त्वं किं करि-ष्यसीत्याकांक्षायामाह जीवातुरिति। किं प्रणयकुशलां जीवनौषधकल्पामस्ति या पारे समुद्रं समुद्रस्य पारे अस्ति यदि वनिता मत्प्रियतमा वलता जनितात्यन्ता-नुरागायां च योषितीत्यमर.। जानकी जनकस्यापत्यं स्त्री तस्यापत्यमित्यण्। मेरोरन्ते सुमेरोर्मध्ये च यद्यस्ति... ति च मेरुः सुमेरुर्हेमाद्री रत्नसानु सुरालय वत्त ते ..इत्यमरः। तदा इति च शेष.। बाणार्चिभि शरहेतिभि अर्चिर्हेतिशिखा स्त्रियामित्यमरः। प्रथमं प्रथमोद्दिष्टं समुद्रमित्यर्थ.। अचिरात् द्रुतं शोषयिष्यामि अशेषं यथा तथा। आशु शुष्कीकरोमि काण्डैः बाणैः। अपरं समुद्रादपरं मेरुमित्यर्थः। त्रसवत् त्रस ... वाति दृढानि च इत्यमरः उद्धूतयिष्ये॥

२०। किंच साधविति। हे साधो हे पण्डित संसुधीः कोविदो बुध इत्यमरः। हे सज्जन साधुर्वार्द्धुषिके चौरो सज्जने चाभिधेयवदिति विश्व सम्बन्धः। अधो .... चेत् अधा भुवने पाताले निहिता स्था पता चेत् अधाभुवन पाताल इत्यमरः। त्वदास्यात् तव मुखात् प्रवृत्तिं वार्त्तां वार्त्ताप्रवृत्तिवृत्तान्त इत्यमरः। श्रुत्वा आकर्ण्य रघुकुले रघूणामन्वये अहं ... ...जातः अचिरात् श्रवणक्षण एवेत्यर्थः। शितैः बाणैः शरसमूहैः धात्रीं पृथ्वीं भित्त्वा भेदनं कृत्वा तं मत्प्रियाहर्त्तारं अधमं मूर्खं .... ..बन्धुपुत्रैः बन्धव सुहृदः पुत्राः सुहृद्पुत्राः सुताः द्वन्द्वसमासः तैः समेतं सङ्गतं तं अरं क्षिप्रं लघुक्षिप्रमरं द्रुतमित्यमरः। हत्वा नाशयित्वा प्रेयसीं प्रियतमां आनयिष्ये॥

२१। शपथमप्यहं कुर्व इत्यभिप्रायेण औत्सुक्यात् प्रोत्साहयन्नाह चन्द्रादित्याविति। हे जलद चन्द्रादित्यौ सोमसूर्य्यौ पवनदहनौ समीरणवैश्वानरौ

द्यौ आकाशं तथा तद्वत् एषा पुरोवर्त्तिनी भूमि... ....करणे नितरामत्यर्थं साक्षिणः निरीक्षका भवन्तु। अहं दिनकरकुले सूर्य्यवंशे जातश्चेत् चापबाणैः चापश्च बाणश्च द्वन्द्वसमासः तैः शपे शपथं कुर्वे.... .. हन्तास्मि हननकर्त्तास्मि ॥

२२। एवं प्रतीक्षाकरणे तव शक्तिरस्ति वा न इत्याकांक्षायामाह। हंहो इति। रंहो लघुतरतया रंहसः अतिशयेन लघुर्लघिष्ठतरस्तस्य मारुतं समीरं समीरमारुतमरुदित्यमरः। जेतुकामै. जेतुं कामो येषां... ...मनसोरपीति अनुस्वारलोपः। साणैः साणनचक्रैः सह गम्यमानेऽपि सहार्थे तृतीया। नव नूतनं येषां तादृग्भिः। परिचितं भावे सद्यः साणितैरित्यर्थः। लब्धलक्ष्यैः लब्धं प्राप्तं लक्ष्यं निमित्तं यैस्तादृग्भिः मदीयैर्मम मे मदीयास्तादृग्भिः बाणैः काण्डैः मुनिकुलगणैः ऋषि .. विश्वा ... चापैः बाणैः करणैः त्रैलोक्ये त्रयाणां लोकानां समाहारस्त्रिलोकी सैव त्रैलोक्यं स्वार्थेऽच् अस्मिन् यत्कर्म तत्कार्य्यं न साध्य तत्कर्म नहि नहि नास्ति नास्ति ॥

२३। भ्रात इति। हे भ्रातः अतः... ...प्रेयान् प्रेयः प्रेयान् तस्य श्रेयः मङ्गलं तस्मिन् प्रयतः प्रयत्नवान् त्वं मे मम वाचिकैः सन्देशवचनैः सन्देशवाग् वाचिकं स्यादित्यमरः। चिरं बहुकालं हृदयगतैः हृत् हृद्गतं गतैः प्राप्तैः मया उदितैः कथितैः उक्तं भाषितमुदित .. तमित्यमरः। असुसमां प्राणतुल्यां प्रेयसीं प्रियतमां इति वक्ष्यमाणप्रकारेण सान्त्वये सान्त्वनां कुरु अत्यर्थं मधुर वाक्यं वदेदित्यर्थः। सान्त्वसामप्रयोगे चुरादिः शिवभद्रयमकप्रयोगात् दन्त्यादिः। सान्त्वकरणे किं स्या दित्याकांक्षायामाह। वार्त्ता इति। कान्ततः प्रियात... आगत्य त्वद्विधानैः भवद्विधैः उक्ताः कथिताः वार्त्ताः वृत्तान्तानि। वार्त्ताप्रवृत्ति-वृत्तान्त इत्यमरः। हृदि मनसि सक्ता लग्नाः सत्यः चिरविरहिताः चिरं बहुकालं सजातविरहाः अतएव आर्त्ताः पीड़ावतीः रमणी ... ....उज्जीवयन्ति। अतः त्वत्सकाशात् मम मनोरथसिद्धिर्भविष्यतीति तात्पर्य्यम् ॥

२४। भवतु नाम भवदुदितं सर्वसत्यं अदृष्टपूर्वां भवत्प्रियामहं कथं जानीयामित्याशङ्कायामाह भ्रामभिति। हे भ्रमविरहित भ्रमरहितः रिक्त तस्य सम्बुद्धौ भ्रमु अनवस्थाने इत्यस्माद्धातोः घञि भ्रम इति सिद्ध। हे तत्वज्ञ साभि-प्रायविशेषणं मयि विषये अनुक्रोशमत्या दयाबुद्ध्या। कृपादयानुकम्पा स्यादनु

क्रोशेऽपीत्यमरः। धीः प्रज्ञा सेमुषि मति इत्यमरः। भ्रामं भ्रामं भ्रान्त्या भ्रान्त्या देशे देशे प्रतिदेशं प्राणभूतामसुप्रायां मत्प्रियां भवान् त्वं मृगयतु अन्वेषयतु। भवच्छब्दयोगात्प्रथमपुरुषः। प्रार्थनायां लोट्। अपि च स्मरहरवधूतुल्यसल्लक्षणाः सा च ....वधू पार्वती तुल्यानि सल्लक्षणानि सामुद्रिकोक्तलक्षणानि यासां ताः रामा दर्शं दर्शं दृष्ट्वा दृष्ट्वा तां मत्प्रियां स्मारं स्मारं स्मृत्वा स्मृत्वा मम समुदितैः कथितैः लक्षणैः लक्षयेथा जानीया। त्यमर.॥

२५। मम समुदितैः लक्षणैर्लक्षयेथा इत्युक्तं तत्प्रकारं चिकुरादारभ्य पादावधि "केशा इत्यादि भ्रू वक्त्रेत्यन्त" विंशत्या श्लोकै प्रतिप्रतीकं वर्णयति। केशा इति। मानवा मौलितो वर्ण्या देवाश्चरणत पुनरिति प्रतिप्रतीकवर्णने कविकल्पलता लक्षपार तेति वचनात् यादृशी सीता लक्ष्मी तथापि राजकुमारीत्वेन लोकव्यवहारात् मानवीत्वमित्यवगन्तव्यम्। अतः केश दि वर्ण्यते। हे प्राणबन्धो हे जीवमित्र।क्ष्मातिलकदुहितुः क्ष्मायाः भुव तिलक इव भूमि भूषणं राजा जनकः तस्य दुहिताकल्पा सीता तस्याः। क्ष्मा ···· मर। तिलको द्रुमराजस्य भेदेषु तिलका तिलके क्लीवं सौवर्चले न स्त्रियां न विशेषके इति मेदिनी। तस्याः कशाः चिकुराः जयन्ति इति त्रिलोकयौवतचिकुरेभ्य सर्वोत्कर्षेण वर्त्तन्ते। जि जये इत्यस्माद्धातोलटि प्रथमपुरुष.... दृशा इत्याकांक्षायामाह। यत आकांक्षायोग्यतासन्निधे मतां पदानां समूहे वाक्यं भवति। वेशात् सुवर्णमणिमुक्तादिकृतशोभावेशः। नेपथ्ये गृहमात्रे च वेशो वेश्यागृहेऽपि चति अलब्धान्ते रभस। विश प्रवेशन इत्यतः.... ....चोलं अलमतिप्रसङ्गेन वेशात् सुवर्णमणिमुक्तादिशोभितायाः हेतोः हेतौ पञ्चमी। नयनसुखदा मम नेत्रयोः सुखानि शर्माणि ददातीति तादृशः ये केशाः ...जनितशोभित्वात् मम नयनद्वारा हृदयसकलसुखकारिण इति भावः। तथा च न्यायशास्त्रे आत्मा मनसा युज्यते मनः इन्द्रियेण इति ... ... इन्द्रियाणां प्राप्य काव्यत्वनियमादिति। किं च .... दृशा. समानस्य सादेश ?) अञ्जनपुञ्जवदतिनीला इत्यर्थः। दैर्घ्यात् दीर्घत्वेन अर्घ्याः पूज्याः। मूल्ये पूजाविधावर्घ इत्यमर। पूजायां यत्र अतिदीर्घत्वेन लोकपूजनीया इत्यर्थः। अलिकुलबलतृस्निग्धताचामरभाः अलीनां मधुपानां या स्निग्धता चिक्कणत्व तथा हेतु चामराणामाभेवाभा येषां तादृशाः अतीव चाकचक्यशालिन इत्यर्थः। किं च कुंचितत्वेन निम्नोन्नतत्वेन कारणेन तुङ्गैः महद्भिः भङ्गैः सुरङ्गैः कलितसखिताः कलिता कृता सखिता सख्यं यैस्तादृशः

अत्यर्थ .. ...। किंच भूय सूक्ष्माः भूयांसो बहुतरा सूक्ष्माश्च इति कर्मधारयः एतैर्विशेषणैर्विशिष्टा केशाः जयन्तीत्युक्तं कवेरभिप्राय.। स्मरहरवधूतुल्यसल्लक्षणा इति पूर्वमुक्तं लक्ष्मीपार्वतीसमानभाग्यशालिनीनां कामिनीनां ...मुत्रिके... ... रस्याः वेशोऽवति वर्णनमुचितं नान्यास्यामिति इतरकामिनीकदम्बके . आसां केशोत्कर्षः समञ्जसो भवति। व्यतिरेकालङ्कारः॥

२६ चन्द्रस्येति। हे प्रियसख चतुर्बाहुपुत्रः कामः चत्वारो बाहवो यस्य तादृशः श्रीकृष्णस्य पुत्र .. ...यस्य तादृक् अपीति... ...। चन्द्रस्य विधोः अर्द्ध अर्द्ध कल्पं चारु निटिलं रुचिरं च तत निटिलं चेति तादृशं मनोहरललाटं अर्द्धचन्द्राकृतित्राणं भल्ले भालुकबाणौ स्त इति... ...तत् वचन .. . मेण अन्वयः। चित्रलेखे चित्रा अद्भूतजानि... ...रेखाद्वये... ...तादृशे च कार्मुके धनुषि हेमधाम्ना स्वर्णतेजसा अपलक्षितौ गण्डौ अतुलफलकौ अनुपमचमणि प्राप्य उपलभ्य त्रिपुर... ...तस्मिन् विजयी विशिष्टविजयवान् कथं न स्यात् स्यादेव। यथा चतुर्बाहु श्रीकृष्णः त्रिपुरविजयी तथा तत्पुत्र कामोऽपि यथा तथा पुत्र इति न्यायेन चतुर्बाहुः सन् धनुर्द्वयं फलकद्वयं बाणांश्च प्राप्य त्रिपुरविजयी स्यादेव।

२७। क्रमप्राप्तं नेत्रं वर्णयति। श्रीततेः शोभाराजेः जैत्रे जेतृणि। जेतुमात्रे जेतृद्वयं जयशीले नु जेता जिष्णुश्च जित्वर इति चेत्यतोऽवगन्तव्यम्। किं च ये नेत्रे चाञ्चल्येन प्रथितशफरं प्रथितश्चासौ शफरश्चेति... .. मित्यर्थः। मीनं वैसारिणं मीनो वैसारिण... ...इति च। शोभयेति का का... ... कन्या येनोभयत्र सम्बन्धः। श्रिया दीनं दरिद्रं शोभाहीनमिति यावत्। निःस्वस्तु दुर्विधो दीनो दरिद्रो... । अपि च दैर्घ्येण दीर्घत्वेन श्रुतितटगते श्रुत्योः श्रोत्रयोः तटगते कूलप्राप्ते। हे वयस्य नूनं शङ्के। तस्या मत्प्रियायाः तत्र वसतिं ... न्ते दधाने किं न किं नु प्रश्ने। एतेनास्याः पद्मिनीत्वं सूच्यते। तदुक्तं रतिरहस्ये पद्मिनीप्रस्तावे चकितमृगदृगाभे प्रान्तरक्ते च नेत्रे इत्यतोऽवगन्तव्यम्। .... ...रामः तयोः ...श्रेयं सौचित्वात् इत्यभिप्रायेण कविना विशेषणद्वयं प्रायोजि। अपि च व्यापजीवकभावेन राम ....

२८। ·· एषा मादृश्या पुरे दृश्यमाना योषाभूषामणिः... ... केण इत्यस्मात् घड़ि जोषा चवर्गादिः। यौतेर्बाहुलकत्वात्सप्रत्ययेनान्तस्थादिरपि। उभ ...

विति ...बाणीनां पारगामिनि .. ... किदृशीं सारं वरं स्मारं स्मरस्य इदं ... एतेन सन्तप्तस्य रघुनाथस्य सन्ताप ... ।

२९ । अङ्गनामूर्द्ध मन्या: प्रसस्ताङ्गयोगादङ्गना । विशेषस्त्वङ्गना भीरुरित्यमर: । आशां मूर्द्ध नो मणी अन्तवर्त्तिनी विभक्तिमाश्रित्य न लोप ।... ... दर्शनोपलक्षितत्वाद्बहुवचनम् । अपाङ्गदृष्टय इति यावत् कर्म । प्रहरणतया आयुधत्वेन केन हेतुना हेतात्रिति तृतीया । नाङ्गीक्रियेरन् ... त: साधनत्वेन अतएव समर्था इति ... .. मायुध .. इति भाव: । निर्य्यान्ति स्मरनाराचा कान्तादृग्वा तकैतवादिति प्रयोगश्च । कीदृश: । अत ... नौ विषये मत्सम्बन्धिनि वञ्चितं तया सारा: श्रेष्ठा: । सारो वले स्थिरांशे च माज्जि पुंसि वरे त्रिष्वित्यमर: । अतएव कान्ता: कमनीया अलक्षित .. गतै: कूलवभूर्कटाक्षैरेवे.... .. अणुं परमाणुं तत्कल्पं अतएव अलक्ष्यं मन मानसं कत्तुं यदीयं येषामपाङ्गतरङ्गितानामिदं तादृक् लक्ष्यं दृश्य . शरव्यं भवतीति शेष: । न स्पर्शमणुना इति तार्किका । लक्ष्यं मेदिनी । मनसोऽलक्ष्यत्वे श्रीह ... .. मन: परमाणोर्हीन .. । कृतमेनं, यत्राथावधिरणु: परम. स्याद्योगिधीरपि न पश्यति यस्मादिति । योगिनां धी: परमाण्वन्तगतं न पश्यति किमु अन्य जनानां लोचनानीतं कैमुतिकन्यायेन मनसोऽदर्शनत्वं सिद्धमेव आयुधपक्षे . ... । अपकृतानि खण्डितानि अ.... णियैस्तादृश अतएव अतनुसुखदा: अतनूनि यानि वेद्धु: सुखानि तानि ददतीति तादृश: । किं च सारा: सहिता: चक्रादय: तद्योगात् सारा: अर्णादि: चक्रादिसहिता इति यावत् । किं च परालक्ष्य गत्या परै: शत्रुभि: अलख्या या गतिर्बाणवेग: .... . गतिर्वेगवशा लोके प्रसिद्धा: । किं च कान्ता: केन जलेन अन्ता रम्या: ... जलेषु कमिति मेदिनी ।... ... र: मृतावशिते रम्ये समाप्तावन्त इष्यत इति शब्दानी व: बाणानां बाणदानं जलदानं लोके सिद्धमेव । यद्वा... .. येषां बाणानामिदं तादृक् लक्ष्यं शरणं मन: अतएव बाणैरलक्ष्यं अदृश्यं परं परमं लक्ष्यं शरदृश्यं भवति परा लक्ष्यपरमाणु: येषां बाणानां दृश्यं शरव्यं भवतीति अति ।

३० । क्रमप्राप्तान् दन्तान् वर्णयति । दन्ता इति ।.... ...स्निग्धभावं मसृणत्वं भजन्त: प्राप्ता: एतादृशा: सन्त. श्लाघ्या: श्लाघनीया. माघ्या विकचकलिका सद्रु व: माघ्यानां कुन्दानां माघ्यकुन्दमित्यमर: । अविकचा विकाशोन्मुखा: या: कलिका: .... ...येषां तादृश: अविकचा इति कलिकानां हरिद्वर्णतानिरासार्थं इत्यवगन्तव्यम् । कोटियुक्ता: शिखरसहिता: सुकविभि: महाकविभि: वाल्मिकाद्यै: मुक्ता

मौक्तिकानीति उक्ता काव्यादौ वर्णिताः सक्तात् लग्नात् ताम्बूलरागात् मनोज्ञ-ताम्बूललोहितवर्णात् रक्ताः रक्तवर्णाः अतएव पद्मराग श्रितः पद्मरागाणां पक्व-दाड़िमबीजाभमाणिक्यशकलानां श्रीरिव श्रीर्येषां तादृशः अतएव पलिताः रुचिराः एतादृग्विशेषणविशिष्टा दन्ता जयन्तीत्यन्वयः। दन्तानां प्राशस्त्यं घनकोटियुक्तत्वादिभिर्भवति तत्सर्वं सामुद्रिकोक्तसुलक्षणमस्या दन्तेष्वित्यर्थः। यस्य शिख-रिणो दन्ताः दीर्घं जीवति तत्पतिरिति लक्षणात्।

३१। क्रमप्राप्तमधरौष्ठं वर्णयति। ओष्ठ इति। हे मित्र प्रियतमगते प्रियतम एव गतिराश्रयो यें.... ओष्ठ अधरौष्ठ ओष्ठस्याधरबिम्बसाम्यादव-गन्तव्यम्। बिम्बोष्ठं बहुमनुते तुरङ्गवक्त्र इति माघप्रयोगश्च जयति। कीदृक् प्रेष्ठ वरिष्ठ... .. सख्या वर्णेन सदृश इति यावत्। अथ च बन्धोर्मम जीवस्य बन्धुः अधरामृतपानेन मम जीवनधारणभवनादित्यभिप्रायः। सुकविसमये महा-कविवर्णनापरिपाठ्यां यदीयं यस्य ओष्ठस्य इदं यदीयं बिम्बं प्रतिबिम्बं.... ... बिम्बं फले बिम्बितायां प्रतिबिम्बे च मण्डले इति विश्वः। किं च मम रुचिगृहं माधुर्य्यमसदनं रुचिस्त्रीदीप्तौ शोभायामभिष्वङ्गाभि... ... भि .. .. शयोरिति मेदिनी। हा कष्टं तादृगधरपानाभावादित्यवगन्तव्यम्। वेधा विधाता स्रष्टा ःजा ... विम्बस्रग्विधिरित्यमरः। लक्ष्म्या शोभया लक्ष्मी कमला तत्कल्पा तादृश्याः मत्प्रियाया मसौष्ठं विधाय कृत्वा यस्य ओष्ठस्य सुधाधामतां वेधा तेने विस्तारयामास। सुधाया अमृतस्य धामतां गृहत्वं सुधाधामा चन्द्रः तेनेत्यन्वयः। ... ....अमृतनिधि चन्द्रमसश्च उपमानोपमेययोः चन्द्रोष्ठयोः समानधर्म रुचि-ष्मतो चन्द्रे रुचीनां त्विषां गृहता ओष्ठे रुचेर्मधुररसस्य ममाभिलाषस्य चेति सद्मता चेति समानधर्मः। अतः उपमालङ्कारः... ... लक्ष्मीरुल्लसति द्वयोरिति लक्षणात्॥

३२। क्रमप्राप्तमास्यं वर्णयति। आस्यादिति। हे सखे अस्या मत्प्रेयस्याः अविकलतरात् अतिशयेन विकलः विकलतरः न च बिकलत्वं अविकलतरं सम्पूर्ण-मित्यर्थः। .. .. मण्डलमिव यः आकारः आकृतिः तेन शोभा यस्य तादृशः। किं च ·· ... निर्मलत्वेन स्वच्छत्वेन विजितमुकुरात् विजितः विशेषेण...येन तादृशः। दर्पणे मुकुरादर्शावित्यमरः। अतएव रम्यात् कान्तात् आस्यात् मुखात्। पर्वणि पूर्णिमायां भवः पार्विकः। पर्वरीशः सुधाकरः माराराते: स्मरहरस्य शिरसि मूर्ध्नि न

वसल्लेखया निवसन्ती वासं कुर्वन्ती या लेखा तया अपूर्णधामा भवनं धाम: शरीरं यस्य तादृक् असमप्रविम्ब इति यावत् । अत. सर्वः नूकू सन् अगर्व न विद्यते गर्वो यस्य तादृक् समजनि संजातः। गर्वो नाम कुलैश्वर्य्यरूपविद्यावलादिभिः। इष्टार्थविषयप्राप्तेर्जायते नीचगोचर इति। आ .. च ह्रस्वखर्वाः स्युरित्यमरः॥

३३। अथ कण्ठं वर्णयति। कण्ठ इति। हे सखे, नृपतिदुहितुः राजकन्यायाः कण्ठे गल इत्यमरः। राजते शोभते कम्बुप्रियतरगतेः कम्बोर्गजस्य प्रियतरा अति प्रिया गतिरिव गतिः .. कम्बुः शङ्खकल्पः कम्बुःशङ्खे स्त्रियां पुंसि शम्बूके वलये गज इति मेदिनी। मान्मथः मन्मथस्यायं मान्मथः त्रिरेखः तिस्रो रेखा यस्मिन् तादृक्। यतः कण्ठ कम्बोः सकाशात् वैणी वीणासम्वन्धिनी वाणी … .. कारणात् सा वीणावाणी पञ्चमस्वर एव प्रसरति तस्मात् कारणात्। चित्रकर्मा चित्रमद्भुतजनकं कर्म यस्य तादृग्विधाता कं जनं न वश्मापयति विस्मय सानं न प्रेरयति सर्वजन विस्मयमानं करोष्येवेत्यन्वयः।

३४। क्रमप्राप्तं श्रोत्रं वर्णयति। ननु हे मित्र प्रातः प्रभातकाले स्मृता स्मरणविषया गुणततिर्यस्यास्तादृशी प्रातः स्मरणायेत्यर्थः। मत्प्रियाया श्रोत्रे कर्णौ कर्णशब्दग्रहौ श्रोत्रमित्यर्थः। प्रातः शोभते कीदृशी स्तोत्रे स्तुतौ विषये स्तवस्तोत्रंनुतिस्तुतिरित्यमरः। दत्तचित्तान् दत्ताः चित्ताः यैस्तादृशाः कवीन्द्रान् महाकवीन् विदधती कुर्वती कवीन्द्रा ये ते कर्णदर्शनेन सामुद्रिकोक्तसकलसल्लक्षणनिधानतया स्तुतिकरणे मनो ददतीत्यर्थः। किं च रत्नताटङ्कभारात् मणिकर्णभूषणं तादृशः गौरवात् दोलाखेलारुचिं दोलाक्रीड़न –प्र गते अनुलक्ष्यीकृत्य कृतत्यप्राप्ते वीरसिंहस्य वीराणां शौर्य्यवतां सिंहस्य श्रेष्ठस्य श्रेष्ठस्य सिंहशार्दूलनागाद्या. पुंसि श्रेष्ठार्थगोचरा इत्यमरः। रतिपतेः कामस्य दिव्यौ नव्यौ नवीनौ प्रत्यग्रोऽभिनवो नव इत्यमरः पाशौ पाशकल्पौ जनाज्जयपाश … …कमित्युत्प्रेक्षा। एतादृक् गुणसम्पन्ने श्रोत्रे जात इत्यन्वयः . अवेहि जानीहि। अवपूर्वादिण गताक्रित्यमुद्धातोर्लोट् मध्यमपुरुष. वाक्यार्थं कम॥

३५। क्रमप्राप्तं भुजं वर्णयति। प्रेयस्या इति। ननु हे बन्धो… … प्रियतमाया .. चम्पककुसुमानां दामनी माले इव मन्ये तर्कयामि। नूनं शङ्के ध्रुव मन्ये प्रा . इत्येवमादयः।… .. ऽपि तादृश इति वचनादुत्प्रेक्षालङ्कारः।

किंवा पक्षान्तरे सुभगे सुन्दरे कोमले .. ...ते भुजलते मृणाले विसे। मृणालं विसमित्यमरः। मन्ये । यस्यास्ते अकलितशिराग्रन्थिभावात् . ... शिराग्रन्थयः यस्यास्तादृशी तस्याभावात् कान्ते कमनीये प्रलम्बे दीर्घे चेत्यन्वयः। ये भुज-लते पुरा राक्षसनयनात्पूर्वं प्रणयवलितौ प्रणयेन च स्वहस्तेन वलितौ निर्गतौ च मम कण्ठपाशौ .. .. पाशौ पाशकल्पौ राजेते शोभेते। यस्तावत्पाशा ... .. भवति स वलितः भवतीति ध्वन्यते ॥

३६। क्रमप्राप्तं पाणिं वर्णयति। पाणीति । हे प्रियसख सुललितगिर सु सुतरां ललिता रुचिरा गीर्वाणी यस्यास्तादृशः। गीर्वाग्वाणी सरस्वतीत्यमरः। पाणी करतले स्फुटे विकशिते वारिजाते पद्मे किमित्युत्प्रेक्षा। व्याकोषविकच स्फुटा इत्यमर । यत्र ययोः पाण्वोः अधिकरणे सप्तमी। घने निरन्तरे अङ्गुलीनां पञ्चके राजेते इति वाक्यशेषः। सारो वरः आसारो धारासम्पातो यस्य तस्य सम्बुद्धौ। धारासम्पात आसार इत्यमर । गन्धफल्युत्करं गन्धफलीनां... ... कलिकानामुत्करं न करं प्रहरणचयं आयुधनिचयं अनङ्गः कामः प्राप्य उपलभ्य शितनखफलं शिताः तीक्ष्णाः नखा एव फलानि शरमुख्यानि यस्मिन् तादृशं लोकान् भुवनानि लोकस्तु भुवने जने इति च। केन कारणेन जेता.... ... सर्वेण कारणनिकरेण ... केन त्रिभुवनविजयी कामः.... ....भावेन तद्विजय .. .. इति ॥

३७। ते इति। ननु हे मित्र यस्याः मत्प्रियायाः करतले पाणितले राजेते । कीदृशी कुङ्कुमोद्दामरक्ते कुङ्कुमेन काश्मीरेण उद्दामरक्ते उत्कृष्टलोहिते। अथ कुङ्कुमं काश्मीरजन्माग्निशिखं, लोहितो रोहितो रक्त इति च। रेखापद्मध्वजय-वदरछत्रचक्रादिकान्ते रेखाः लेखारूपाणि। यव यवा रः, दरः शङ्खः छत्रमातपत्र चेति द्वन्द्वः। .. ... निदोदयः आदिपदेन अङ्कुशस्वस्तिकाष्टकोणादयः तैः कान्ते कमनीये। "वन्देऽम्बुजाङ्कुशयवध्वजचक्रलेखास्वस्त्यष्टकोणपविचिह्नितदक्षिणांघ्रिम्। शङ्खत्रिकोणधनुरम्बरमत्स्यबिन्दुचन्द्रार्द्धगोष्पदघटाङ्कितवामपादः ।।"... ... एक-वचनमित्यवगन्तव्यम् यदीयात् ययोरिदं यदीयं तस्मात् स्पर्शात्... ... वरमलय-जालेपने वरस्य मलयजस्य गोशीर्षादि .. .. आलेपनं घषणे गन्धसारो मलयजे भद्रश्रीचन्दनेऽस्त्रियामिति च। कर्पूरात् सिताभात् घनसारश्च··· ·· गमने वलव् शम बहुतरसुखं द्राक् झटिति भवतीति शेषः ।... ... कर्पूरं घर्मनाशकं भवति। तस्मा... ...पीति द्योतयितुं अपेः प्रयोगः ॥

३८। ताविति। तौ प्रसिद्धौ वक्षोजौ स्तनौ जयतः। सर्वोत्कर्षेण... .. चन्द्रेण कर्पूरेण . घनसारश्चन्द्रसंज्ञ इति च ·· कान्ता रुचिरा यौ समतां समानत्वं ... ·· तादृशौ किं च सर्वदा अनन्तहारौ अनन्ताः अमिताः हाराः ययोः तादृशौ किं च श्रीसद्भावे .. ...उत्कृष्टौ अनयोः उत्कृष्टशोभा यथातथान्यत्र कुत्रापीत्य ... किं च गिरीशोन्नतौ गिरीशावेव उन्नतौ उच्चौ एतद्विशेषणविशिष्टौ स्तनौ जयत-इत्यन्वयः। अत्र प्रस्तुतयो स्तनयोः वर्णने अप्रस्तुतयोः शंकरयोः प्रतीते समासो .... ...लक्षणात् शंकरौ शं कल्याणं कुरुतमिति शंकरौ जयत इति पूर्ववदन्वयः। कीदृशौ चन्द्रकान्तौ चन्द्रश्चन्द्रकला कान्ते मनोहरे ययास्तादृशौ हे रुचिर हे सुन्दर सममाभिः सहितः तस्य संबुद्धौ तां प्रसिद्धां कालधौतीं रौप्यसम्बन्धिनीं रुचिं दीप्तिं दधानौ बिभ्राणौ सती भूभृत्पुत्री पार्वती तस्या हृदयं मनः तदेव वसतिर्ययोस्तादृशौ सर्वदा अनन्तहारौ अनन्तः शेषः हारो ययोस्तादृशौ शेषेऽनन्त इत्यमरः। श्रीमद्-भावे श्रीः गरलजन्यशोभा तत् सद्भावे अनुपमतरौ यौ गिरीशोन्नतौ गिरीशे कैलासे ऐश्वर्य्यवन्तौ स्तनौ गिरीशाविव इत्युपमालङ्कारः। समकुचत्वं स्त्रीणां सामुद्रिके प्रशस्तं भवति । विसमकुचत्वं निन्दितं भवति। यथा रक्ताक्षीरक्तकेशी प्रविरलदसना--कामना--दीप्तदेहासगतभ्रूर्विसमकुचयुगादीर्घजंघोरुपादेति स्त्रीनि-न्दायां ... ... अतः व्यतिरेकेण... ....वगन्तव्यम् ॥

३९। कान्तेति। ननु हे सखे हे मित्र रोमावलिः रोमराजिः अथ प्रश्ने पृच्छा-मीति यावत्। चित्रा अद्भुततरा ननु निश्चितं विजयते। विपराभ्यां जेरिति परस्मैपदम्। तस्य विजयः सुन्दर इत्यर्थः। आलेख्यलेखेव अतएव आलेख्या-श्चर्य्ययोश्चित्रमित्यमरः (?)। कथमाश्चर्य्यजनकेत्याकांक्षायामाह। या रोमालिः स्तनौ श्रीफले .. ....सम्पन्नविल्वफलं तावत् विल्ववृक्षसम्बन्धि भवति। तल्लतायां जातमिति चित्रपदप्रयोग इत्यवगन्तव्यम्। अत्रोत्प्रेक्षालङ्कारः। अन्यथा-त्प्रेक्षते यत्तु तामुत्प्रेक्षां विदुर्बुधाः इति लक्षणात्। किं च यत् यस्मात् कारणात् गम्भीरान्तः सरस्विलसद्दक्षिणावर्त्तनाभि ... .. सरस रससहितं अतः विल-सन्ती शोभमाना दक्षिणावर्त्ता या नाभी सैव कूपः अन्धुः तस्य अन्तात् निकटात् जननं जनुः अभजत् अलभत् .. ....सवर्द्धितं सम्यक् समृद्धं... .. न किं वर्द्धित इव या काचित् लता कूपनिकटे चैतद्वर्द्धते इति.... ... नाभ्यां गम्भीरत्वं दक्षिणा-वर्त्तित्वं सामुद्रिके प्रशस्तं भवति। तल्लक्षणं तु विस्तरभयात् न लिखितम्॥

४० । नेत्रावासादिति । हे सखे पक्ष्मलाक्ष्या पक्ष्म नेत्ररोमराजी ता लाति इति पक्ष्मले अक्षिणी यस्याः तादृश्याः मत्प्रियायाः पुलिनललितात् रुचिरात् आरोहात् .. .. सिंहासनात् भद्रासनात् न पासनं (?) तु यद् भद्रासनं... सिंहासनं च तदित्यमरः। केन केन हेतुना इह लोके राजायते राजेव आचरति राजायते एवेत्यर्थः अद्धा सत्यं कामः कीदृक् भूयो भूयः पुनः पुनः प्रमदभरितः कार्मुकमिति च धुन्वन् कम्पयन् त्रिपुरविजयी त्रयाणां पुराणां समाहारस्त्रिपुरं तस्य विजयोऽस्यास्तीति त्रिपुरविजयी सन्नित्यर्थः ।

४१ । सखितां मित्रतां चक्रे चकार इत्यतः चित्रं किं नु न चित्रं औचित्यमेवेति भावः । अथ च स प्रसिद्धः श्रीनिवासः श्रियः लक्ष्म्याः निवासः वसतिः .. ....स्थलस्थितलक्ष्मीकत्वादवगन्तव्यम् । सुरुचिं चक्रे सुदर्शने सखितां चक्र इत्यतः औचित्यमिति प्रस्तुताप्रस्तुतश्लेषः । स इति कः । यत्तदोर्नित्यसम्बन्धात्तच्छब्दो यच्छब्दमाकांक्षते । योऽयं नितम्बः भास्वान् रविः अभवद् .. .. खेदे इति च । अहं नो वेद्मि न जाने । शुभ्रांशुकश्चन्द्रः कथं स्यात् । यस्तावद्रविः कथं चन्द्र इति विरोधः । शुभ्रांशुत्वे शुभ्रांशुकः स्वार्थे कः । किं च यश्च नितम्बः सौम्यः सोमसुतः बुध इति यावत् स कथं गुरुर्जीव समजनि । भास्वान् सुन्दरः स कथं कन प्रकारेण शुभ्रांशुकः शुभ्रमुद्दीप्तमंशुकं वस्त्रं यस्मिन् तादृशं नो स्यात् स्यादेव विधौ लङ् । अहं न वेद्मि । सुन्दरस्य शुभ्रांशुकधारित्वं विधिरेवेति भावः । भास्वान् सुन्दरसूर्य्ययोरिति विश्वः । गुरु... ... पितरि दुर्भे .. .. । अहहेत्यद्भुते खेदे इत्यमरः । विरोधाभासोऽलङ्कारः । आभासत्वे विरोधस्य विरोधाभास उच्यते इति लक्षणात् ॥

४२ । उर्वोरिति । जम्भाहितहितः जम्भनाम्नोऽसुरस्य अहितः शत्रुः । तत्सम्बुद्धो हितः मित्रं तस्य सम्बुद्धौ । हे जम्भाहितहित जलधर जम्भभेदी हरिहय इत्यमरः । प्रियायाः प्रीणातीति प्रिया तस्याः.... .. प्रियायाः... .. गुरुतां श्रेष्ठतां को वदेत् को वा जनः कथयेत् । न कोऽपीत्यर्थः विधौ लिङ् । किमित्याकांक्षायामाह । रम्भा कदली प्रकाण्डः रम्भा मोचांशु मरालेत्यमरः । जिता पराभूतेति अमूभ्यामिति ... .. सर्वेषां जये मही . ... भवत् । गौरवं भवेदित्याकांक्षायामाह । यतः यस्माद्धेतोः सा रम्भा स्वसारेण निजमज्जाहीना रिक्ता भवति अन्तः सारशून्येत्यर्थः । तर्हि अन्ये के सारवन्तो जिता इत्याकांक्षाया-

माह । दार्ढ्यसारांशभाजः दार्ढ्यं दृढत्वं सारांशं भजन्तीति तादृशः अन्तर्बहिः च निःसारा इत्यर्थः । शुण्ढादण्डान् शुण्ढा दण्डा इव शुण्ढादण्डान् वर्त्तुलकरीकरान् जितवतोः विजयमानयोर्मम प्रियायाः ऊर्वोः सिद्धिं प्रख्यातिं के के वा जनाः सुचिरं बहुकालात् न जानन्ति सर्वेऽपि जानन्तीत्यर्थः ॥

४३ । पादाविति । हे सखे स्थलनलिनवत् स्थलकमले इव रम्यौ रुचिरौ लोममात्रेण शून्येनापि ... त्यर्थः । दीनौ शून्यौ किलादपि किञ्चिदपि .... क्वापि कुत्रापि उचितां चित्रभावं नेतः प्राप्नुत किं च अङ्गुलीनां अविरलतया.... अकृत्रिममित्रे किं च गूढगुल्फे .. ... तौ पादौ ... .. दज्ञाने इत्यस्माद्धातोर्लोटिमध्यमपुरुष. । भूम्ना वाहुल्येन किं स्यात् ॥

४४ । ....भ्रूवक्त्राक्षिस्तनगलवलद्भालपट्टात् भ्रुवौ वक्त्रं अक्षिणी नेत्रे स्तनौ कुचौ गलः कण्ठः... ....भालं पट्टमिव प्राण्यङ्गत्वादेकवद्भावः तस्मात् नितम्बात् कटिपश्चाद्भागात् । पश्चान्नितम्बस्त्रीकट्यामित्यमरः । क्रमालंकारः । यथाक्रमं चापं धनुः पद्मं शफरकलसौ... .. कम्बुं शङ्खं अर्द्धेन्दुचक्रेण अर्द्धचन्द्रे रथाङ्गे चेत्येतानि सर्वाणि भग्नानि भङ्गं परायं प्रापितानि आकलय्येति वाक्यशेष । वलात् प्रसह्य रोषात् कोपात् कोपक्रोधामर्षरोष इत्यमरः। समाकृष्य अलक्तकाङ्करुपस्य यावकस्य... ...छलेन व्याजेन चरणवरणे चरणावेव वरणः प्राचीरः तस्मिन् प्राचीरो वरणशाल इति चिक्षेप क्षिप्तवती .. .. ज्ले प्रशस्तलेखाधारचरणतलरुचिरशालिनीत्यर्थ । लोके यस्य वनमहाराजः कुपितः सन्... ... प्रसह्य तां न दुगादौ वन्दी करोति तथा प्रकृतेऽपि सर्वसल्लक्षणसम्पन्ना राजकन्या स्वाङ्गैः करणभूतैः चापादीनि सर्वाणि विजित्य रोषात् बलात् समाकृष्य चरणवरणे निक्षिप्तवतीति सकलसल्लक्षणसम्पन्नतया प्राभवं गम्यते । एते मम ... ... ॥

४५ । एवं प्रति ... ... त्रिभिः श्लोकैः स्ववल्लभागतधर्मान् वर्णयति । ह्रस्वमिति । हे जलधर रमा रमणीया सा बाला यौवनमध्यस्था बाला यौवनमध्यस्थेति लक्षणात् स्वं शरीरं नितराम .. .. च स्वं न भजन्ती वाला स्थूला पीना च भवति । प्रकाममत्यर्थं कृशतनुरपि न एते .. .. सकलसल्लक्षणसम्पन्ना महाराजमहिषी .. ..योग्यप्रमाणेति ज्ञायते । वर्णानि कीदृशीत्याकांक्षायामाह ।

नारीकुलमणि कान्ताकुलरत्नभूता... ...केतक्याः कुसुमस्य गर्भित ... ...गरगौरी पीतवर्णा पीतो गौरे हरिद्राभ इत्यमरः। अस्याः एतल्लक्षणलक्षितायाः गुणानति गुणानतिक्रम्य नक्तंदिवं रात्रिंदिवमभिव्याप्य वक्तुमभिधातुं कंचित् कमपि शक्तं समर्थं नैक्षे न विलोकये कमपि ब्रह्माणमपि च। .. अपि .. ...तादृशं चेति भावः। अस्याः गुणानां पारं चतुर्भिर्मुखैः रात्रंदिवं वदन् ब्रह्मापि न यास्यतीत्यर्थः ॥

४६। किं च गुर्वीति। ननु हे मित्र उर्वीवलयरमणीसन्तते. उर्वी वलयमिव उर्वीवलयं भूमण्डलं तस्मिन् या रमण्यः सुन्दर्य्यस्तासां सन्ततिः... ...या वशगुणोपचारेण कान्तं रमयति। सा रमणी .. ...गुणवतीनां गुर्वी उपदेष्ट्री उपाध्यायीति यावत्। गुरुस्तु शिष्यतो श्रेष्ठे गुरौ पितरि दुर्भर इति विश्व। स्वर्णभास्वद्वर्णा स्वर्णं सुवर्णं स्वर्णं सुवर्णं कनकमित्यमरः। तस्य भास्वान् सुन्दरः वर्णः... ..विश्वः किं च कर्णांचितलोचनमित्यर्थः। किं च पूर्णसितांशुवक्त्रा पूर्णश्चासौ सितांशुश्चेति पूर्णसितांशु सम्पूर्णश्चन्द्रस्तत्कल्पं वक्त्रं यस्या मध्यपद्लोपिकर्मधारयः।... ...वीणां वल्लकीं क्षीणां कृशां चिन्तयेति... ...नाभवमिति चिन्तया कृशाभूदित्यर्थः। पिकमपि कोकिलमपि कोकिलः पिकेत्यमरः। मधुरस्वरतया लोकप्रसिद्धमित्यवगन्तव्यम्। जडं मूकं कृत्वा विधाय चिन्तयेति वाक्यशेषः। पूर्ववत्... ...वेणुं वंशमपि अभिमाने सुस्वरगर्वे विषये रेणुं धूलिं उच्चैः बहुतरं निदधती निक्षिप्तवती सुस्वराभिमानशून्यतरं कुर्वन्तीत्यर्थः। वेणुमपि जडं कृत्वा एतेन... ...वेणुमपि चत्येतानेव कृत्वा एतेषु विषये अभिमाने अभिमाने धूलिं निक्षिपन्तीत्यर्थः। उत्कलदेशस्थजनभाषाव्यवहारे कविरेवं वर्णयामासेत्यवगन्तव्यम्। अपादानसम्प्रदानकरणाधारकर्मणां कर्त्तुश्चान्योऽन्य... ...अतो कर्माणि स्थितिरिति ज्ञेयम्। कण्ठस्य पिकवेणुवीणासाम्यं श्रीहर्षः। "कण्ठः किमस्या पिकवेणुवीणास्त्रियोजिताः स्युरिति त्रिरेख इति। कण्ठो गले सन्निधाने स्वरे मदनपादपे इति मेदिनी ॥

४७। साक्षादिति। .. ...वामाक्षीं वामे सुन्दरे अक्षिणी यस्यास्तादृशीं मत्प्रियामाकलयतु जानातु। कीदृशीत्याकांक्षायामाह। साक्षात् द्राक्षारसमधुरिमोद्गारिवाणी वदन्ती साक्षात् प्रत्यक्षं द्राक्षा नाम द्राक्षा ...मुद्गातुं तरङ्गयितुं शीलमस्याः। तादृशी साक्षात् द्राक्षारसमधुरिमोद्गारिणी या वाणी वचनं तां

कथयन्ती साक्षात् प्रत्यक्षतुल्ययोः। मृद्वीकागोस्तनी द्राक्षेति चामरः। रसो गन्धे रसः स्वाद इति विश्वः। नि··· ···गौणवन्तव्यपाश्रयः। अपि सुन्दरमन्यत्र ग्राम्यकक्षां बिगाहत इति दण्डी। किं च नागं करिणं स्वगर्वे स्वस्य आत्मनः गर्वे अहङ्कारे रागमनुरागं त्याजयन्तीं मोचयन्तीं स्वो ज्ञातावात्मनि त्रिषु। गर्वोऽभिमानोऽहंकारोऽनुरागे मात्सर्य्य इति चामरः। किं च गोरीं गौरीसदृशीं गौरीपदेन तत्सादृश्या लक्षणा। मम मनसश्चित्तस्य चौरीं तस्करीं मम चिरकर्षणगुणमन्त्रशालिनीत्यर्थः किं च धैर्य्यराशेः धृतिसमूहस्य सन्निधिं सम्यङ् निधानं सन्निधि निधिभावेन धैर्य्यस्य रत्नसाम्यं गम्यते। किं च सर्वलावण्यसीमां सर्वाङ्गं च तानि लाबण्यानि च तेषां सीमां स्थानं लवणा कान्तिविशेषः। लवणेन लावण्यं स्वार्थे यत्··· ···लावण्यमिहोच्यते इति लक्षणात्॥

४८। एवं प्रस्तुत्य पुनः प्रकारान्तरेण वर्णयति श्यामामिति। हे मेघ हे अतनम अतनवः अनल्पमाः शोभा यस्य तादृक्। मा निषेधे प्रभालक्ष्म्योरिति नानार्थदीपिका। धन्वी धनुष्मान् रागिणां च··· ···रागिणस्तेषां अनुरागवता रागवतां रागस्य अनुरागस्य दाता वितरण··· ···वितनुः विगता तनुर्यस्य तादृगनङ्गः निजरिपुजये निजस्य स्वस्य रिपुः शत्रुः शिवस्तस्य जये विजये स्वं स्वकीयं धनुः संधुनीते नमयति। किं कृत्वेत्याकांक्षायामाह। रामां रमणीयां तां मत्प्रियां शस्त्रिकां छुरिकां··· ···ललितां च तां किदृशीं बलिसुरुचिरा बलिभिः उदरस्थितत्रिवल्या सुरुचिरां रुचिरां ललितां किं च निर्मलाङ्गीं निर्मलं स्वच्छमङ्गं तनुर्यस्यास्तादृशीं अमोघां अव्यर्थं··· ···स्वाहित्यवगन्तव्यम्। असम्पादयतः किंचिदर्थं जातिक्रियागुणैः यदृच्छाशब्दवत् पुंसः संज्ञायै··· ···केवलमित्यवगन्तव्यम्। किं च सन्मेखलां सतो साध्वी मेखला काञ्ची यस्यास्तादृशीं एतादृक् विशेषणविशिष्टां रामां प्राप्येत्येन्वयः। यस्याः मेखला खड्गबद्धे स्यात्काञ्चीशैलनितम्बयोरिति विश्वः। यस्तावद्धन्वी भवति स शस्त्रिकां प्राप्य कामेन निजरिपुविजयमनोरथेन उद्दामः सन् निजरिपुजये अचिरं संधुनीत ध्वन्यते। धन्वीति कीदृक्। रागिणां मात्सर्य्यशालिनां रागदाता रागस्य मात्सर्य्यस्य दाता खण्डयिता शस्त्रिका, कीदृशी रामां रमणीयां बलिसुरुचिरां वलिनां वलवतां सुरुचिं सुतरां शोभां राति ददातीति तादृशीं छुरिकाधारणात् वलिना शोभोत्कर्षत्वादिति भावः। अथ वलिनामभिलाषं रातीति तादृशीं रुचिस्त्रीदीप्तौ शोभायामभिष्वङ्गाभिलापयोरिति मेदिनी।··· ···इति देशभाषानु-

करणशब्दः घोरणीशब्दवत् । अमोघां समानं यत्र कार्य्ये प्रहर्त्तुरिच्छा तत्कार्य्यकारिणीमित्यर्थ. । अतनुं न तनुरतनुः अल्पकृशां··· ···खलां··· ···किं च ···शक्तिका जगति बहुशो न सन्तीत्यर्थः । तनुः काये त्वचि स्त्री स्यात् स्त्रीष्वल्पे विरले कृशे इति मेदिनी ॥

४६ । पुन. स्वप्रियायाः विश्लेषजन्यपीड़ां श्लोकद्वयेन प्रपञ्चयन्नाह । दूनेति । ··· ···लेखो अदितिनन्दना इत्यमरः । किं च इयं मल्लक्षणलक्षिता कृशतनुः कृशा तनुर्यस्यास्तादृशी तन्वङ्गी तत्रापि अतितन्वी अतिकृशा खिन्ना खेदं प्राप्ता स्मरशरशतैर्भिन्ना विदारिता हन्त खेदे लावण्यशेषा लावण्यं शेष अ·तं यस्यास्तादृशी कुज्झटिव्रातमध्ये··· ···असान्द्रं सान्द्रं कृतं सान्द्रीकृता घनीकृता निजरुचिः स्वप्रभा यस्यास्तादृशी । चान्द्री चन्द्रस्य इयं चान्द्री द्वितीया रेखा लेखा इव स्थिता स्वेन आत्मना कान्ता कमनीया अतः सुखकरी वर्त्तेत पश्ये त्वं कलय अभूतद्भावे च्विः । प्रार्थनायां लोट् ॥

५० । गौरीति । गौरी गौराङ्गी मीना··· ···स्यात् प्रचलनयना प्रकृष्टेन चले लोले नयने यस्यास्तादृशी । चलं लोलं चलाचलमित्यमरः । चञ्चलतया लोकप्रसिद्धान्न स्यादपि चलाचललोचनेत्यर्थः । धूलिभि. रेणुभिः दग्धदेहा गगने नभसि सौरी सूरस्य इयं सौरी सूर्य्यसम्बन्धिनी रुगिव प्रभेव स्थितिः यस्याः प्रभारुचिस्त्विड्भा इति च । सुरुचिरमभितः सर्वतः राक्षसीभिः कौणपीभिः निरुद्धा नितरां आवृता सा रामा उमा धूमभूमीनां भूम्नां··· ···आवृतमङ्गं यस्यास्तादृशी··· ···स्थितिरिव स्थितेत्यन्वयः ॥

५१ । एवं विरहवेदनातुरः सन् पुनर्भङ्ग्यन्तरेण स्वचरितं द्वाभ्यां विषदयति । वास इति । हे जलद, मम राजभोगोचिते राज्ञामर्ह··· ···अर्हेति तरुणे वयसि अरण्ये वनवासः वसतिर्जात इति वाक्यशेषः । अस्मिन् वनवासेऽपि तातः पिता दशरथमहारजः तातस्ते जनकः पितेत्यमरः । सुरपतिपुरं महेन्द्रभवनं यातः गतः । मद्वियोगातुरः सन् ··· ···तां निरासार्थं··· ···याग इत्यवगन्तव्यम् । तत्रापि तद्दुःखद्वयं भवतोऽपि इत्यर्थः । हन्त खेदे । स्त्रीकुलमणिरियं मद्वचनलक्षिता··· ···राक्षसा राक्षसेन नीता कीदृशी··· ···अतः परं किं भविता किं दुःखं भविष्यति अहं न वेद्मि न जाने । एतद्दुःखं दुःसहम् । अतोऽधिकं दुःखं नास्तीत्यर्थः ॥

५२। पुनः स्वदुर्दैवविलसितं विस्तारयति धातेति। हे सखे मित्र। किं च यः धाता विधाता जगतां भुवनानां कल्याणं मङ्गलं कर्त्तुं शीलमस्य कल्याणकारी च कल्याणं मङ्गलं शुभमित्यमरः। स धाता शिवशिव मम दुष्टाद्दिष्टात् दुःस्वभावदैवात् दैवं दिष्टं भागधेयमिति च। प्रातिकूल्यं प्रतिकूलतां जग··· ···कुत इत्याकांक्षायामाह। हि यस्मात्कारणात्। हि ह्यो तावदवधारण इति च। लोकबन्धोः लोकानां भुवनानां जनानां बन्धोर्मित्रस्य। प्रद्योतनो दिनमणिः खद्योतो लोकबान्धव इति त्रिकाण्डः। भुवनमहिते भुवनैस्तत्स्थैः··· ···ते वंशे कुले जातं जन्म प्राप्तं मां विना मत्तो ऋते अन्यः मदितरः को वा जनः दुःखराशेः भाजनं पात्रं भवेदिति शेषः। विधौ लिङ्॥

५३। पुनर्भङ्ग्यन्तरेण तद्विरहवेदनां प्रपञ्चयति। वारामिति। नृपतितनया राजकन्या स्वदृग्भ्यां आत्मलोचनाभ्यां धारातितिभिः करणैः स्वल्पाम्भोभिः सुतरां स्तोकजलैः हेतुभिः जलाशयेषु संप्रतप्तान् अतितप्तान् अतिसन्तापवत रुद्धा··· ···ल चिरान् कर्म दिशि दिशि प्रतिदिशं नीराधारान् जलाशयान् पूरयित्वापि पूर्णं कृत्वापि तस्मिन् बन्दीगृहे तान् अनल्पं बहु तापयेत् तापं करोति तापयति, तत्करोति तदाचष्ट इति णिचि विधौ लिङ्। हा कष्टम्। अल्पजल··· ···पादीन् लोतकप्रवाहैः पूर्णीकृत्यापि तेषां तापान्न मोचयेदित्याश्चर्य्यम्। लोतकजलानामुष्णत्वाद् तस्याः शोकातिरेको गम्यते। अतः कष्टं खेद इत्यवगन्तव्यम्। कारणे सत्यपि कार्यमुत्पत्तेः। अतिशयोक्तिरलङ्कारः॥

५४। पुनः प्रियाया विरहावस्थानं वर्णयन्नाह। प्राणीति। मम सा वनिता प्रेयसी वनिता जनितात्यन्तानुरागायां योषितीति लक्षणात्। अप्राणी प्राणीभूता प्राणीभूता अभूततद्भावे च्वि अप्राणरूपेत्यर्थः। अतिकार्श्यं अत्यन्ततनुतां भजन्ती प्राप्ता। स्मरशरशतैः कामकाण्डशतैः··· ···गाढ़वाढ़दृढ़ानि चेत्यमरः। भूतले पृथ्वीतले··· ···गुणानां निधिर्निधानं निधिसान्निध्याद्गुणानां रत्नत्वं गम्यते। मद्विच्छेदावधि··· ···कर्मणि तद् यथा तथा·· ···एकमद्वितीयं वस्त्रं यस्य।··· ···तादृशी तादृक् च सती बाणविद्धा बाणेन शरेण विद्धा वेधप्राप्ता एव हरिणी किं हरिणीव सन्तप्ता सन्तापवती स्यात् भवेत्।··· ···हरिणी सन्तापं प्राप्नुवतीत्यर्थः। राजकन्यायाः सन्तप्तायै खेद इत्यवगन्तव्यम्। ओड़िशादेशीयकामिनीनां परिधानं तावद्वस्त्रद्वयेन भवति। एकमर्द्धोरुकं अपरः निचोलश्चेति।

तथैव वेणीद्वयमेका चूर्णकुन्तलोपरि एका चेति वियोगे एकवस्त्रकवेणी स्त्रीतति: प्रायशो भवति । विशिष्टसाध्वीत्वात्कारागृहगतत्वात् चैवमित्यत्रधातव्यम् । प्रोषिते मलिना कृशा । मृते म्रियते या नारी सा स्त्री ज्ञेया पतिव्रतेति लक्षणात् ॥

५५। पुन: प्रियावेदनाविलसितं प्रपञ्चयति । पार्श्वे इति । नृपतिदुहितु: राजकन्यायां: मत्प्रियाया: पार्श्वे सविधे काचिद्वयस्या काप्येका सखी नास्ति। हा हा महत्कष्टम्। विरहवेदनापाकृतिप्रवीणता धुरिणा एकापि सविधे नास्ति महत्कष्टम्। किं च दिशि दिशि प्रतिदिशं यस्या नार्य्या मुखं पश्येत् विलोकयेत् सा स्वीया स्वकीया नहि भवेत् हन्त पुन: खेद । किं च विधिवशात् प्राक्तना-शुभकर्मवशात्। प्राणबन्धौ प्राणानां... .. मयि दूरीभूते अदूरो दूरीभूतस्तादृशि दूरस्थे सतीत्यर्थ: । आपदन्धौ । आपत् विपत् सैव अन्धु कूपस्तस्मिन् । पुंस्ये-वान्धु:...इत्यमर: । गता पतितेत्यर्थ: । किं वा दु:खं किं स्वरूपां पीड़ामनुभवतु प्राप्तकाले लोट् । दु:खानुभवकाल प्राप्त इत्यर्थ: । हा कष्टम् शोकद्वये.... ....न्त्यानुप्रासाख्य: अलङ्कार: । स... .... ....पूर्वस्वरसमन्वितम् । आव-र्त्तन्तेऽन्त्ययोज्यत्वादन्त्यानुप्रास इति लक्षणात्। भजन्ती लुठन्तीति पूर्वाकार-साहित्यात्। वेणी एणीति पूर्वं.... .. वयस्या यस्या बन्धौ अक्षे चेत. तादृगवस्थि-तेरित्यवगन्तव्यम् ॥

५६। पुन. प्रकारान्तरेण··· ···श्लेषवेदनां विषदयति । चित्रमिति । किं च जनकतनयावक्त्रपीयूषभानो: जानकीमुखरूपामृतधाम्न: मित्रं सुहृत् अमृतभानु: ... ...दिग्युवत्या: दिगङ्गनाया मुखं तदेव मुखं वदनं तस्य मलयजभाव: चन्दनरचित विन्दुश्चित्रकल्प: । चन्दनोऽस्त्रीमलयज इत्यमर: । एतेन मण्डला-कृत्या चन्द्रस्य पूर्णत्वं गम्यते । एतादृगिन्दुश्चन्द्र: जालाञ्चितकरचयै. गवाक्ष-निकरै: तां मत्प्राणकल्पां बालामप्रगल्भां दहेव दाहं कुर्य्यात् । कीदृशै: करैरग्नि-कल्पैरनलवद्दाहकरैरित्यर्थ: । इषदसमाप्ते कल्पदेशदेशीय: । चित्रमहो । उक्तमर्थ-मर्थान्तरन्यास: । .. ... हा कष्टं जगति कलङ्किनि कलङ्कोऽस्यास्तीति तादृशि जने सौहार्दं सुहृदो भाव... ...नोदेति न प्रकाशते । विशेषेण सामान्यसमर्थनरूपो-ऽर्थान्तरन्यास: । यस्तावल्लोके यस्य मित्रं भवति स तदीयबन्धुवर्गे... जानकी-मुखामृत···दहतीति महदाश्च... ....कष्टं ·· ··॥

५७। येति । मे मम प्रियसहचरी प्रिया चासौ सहचरी चेति तादृशी चेति तादृशी भूमिजा भूमेर्जाता तादृशी...वामे दक्षेतरे अङ्के उत्सङ्गे वसन्ती

उपविष्टा सती चञ्चलालिङ्गिताङ्ग ... ....आलिङ्गितमाश्लिष्टमङ्गं तनुर्यस्य तादृशं त्वां भवन्तं प्रणयभरतः स्नेहातिशयात् पञ्चम्यास्तसिल् । आलोक्य वीक्ष्य साधुमाधुर्य्यवाणी साधु सत् माधुर्यं मधुररसः यस्याः तादृशी वाणी वचनं यस्यास्तादृशी... नौ आवयोः सादृश्यं समानतां निगदितवती रागाम्भोधौ अनुरागसमुद्रे निदधती निक्षिप्तवती गिरां वचनानां पारं परपारं हा कष्टं, हे प्राणबन्धो अयं विद्युत् सहचर घनाघनः भवत्साम्यं बहन् राजत इति ... ... वन्दन्ती मानुरागसलिलराशौ मज्जयन्ती तत्समयं तादृगनुरागं वर्णयितुमसर्था इति भावः ॥

५८। अब्दमिति। नारी साध्वी चासौ नारी चेति पुंवद्भावः। तादृशी नारीसीमन्तिनी वधूः सती साध्वी पतिव्रतेति चामरः भूपालपुत्री भुवं पालयतीति भूपालः राजा तस्य पुत्री सुता। कारागारात् बन्दीगृहात् अपि गतवती निःसरन्ती कस्मैचित् कार्याय बहिर्भूतेत्यर्थ । विद्युतालिङ्गिताङ्गं चञ्चलाश्लिष्टतनुं शब्दं स्तनितं विदधतं कुर्वाणं अब्दं अपः ददातीति तादृशं जलदं शिखरीशिखरे शैलशृङ्गे दृष्ट्वा वीक्ष्य तद्वृत्तान्तं त .. ....तारं शीघ्रं स्मृत्वा स्मरणविषयीकृत्य। सदृशा... ...स्मृतिबीजस्य बोधका इत्यतोऽवगन्तव्यम्। अधुना इदानीं परं केवलमसुचयं प्राण... ....बहन्तो कथं स्यात् प्राणानपि भारमिव मन्वाना हा कष्टं कष्टेन... ... प्राणानां भारत्वं गम्यते। वृत्त्यनुप्रासः पूर्ववत्। साधुना साधुनारीति यमकानुप्राणित शब्दालङ्कार ॥

५६। पुनः प्रकारान्तरेण प्रियाया स्वस्मिन् पूर्वानुरागं प्रकटयन्नाह। मञ्च इति। हे मित्र रमणीया... ....स्वपिति सा रमणी तूलिकाद्यैराङ्कवास्तरणादिभिः? सनाथे संयुक्ते मञ्चे पर्यङ्के । शयनं मञ्चपर्यङ्क पल्यङ्काः खट्वा समा इत्यमरः। स्वं... ....स्वपिति चेत् स्वापं करोति यदि मित्रसाधूपधानं मित्रे प्राणबन्धौ साधु सत् उपधानं महोर्दण्डं.... यदि न प्राप्नोति चेत् प्रणयस्य विवशा स्नेहस्य आयत्ता मामालिङ्ग्य.... ... गाढं दृढं आलिङ्गिताश्लिष्टा चापि तदा गतसयोगकाले या मया साकं निद्रालेशं निद्रालवमपि न भजति न प्राप्नोति। लवलेशकणाणव इति च सा.... ....न ॥

६०। सम्प्रतीति। हे सखे। एषा मल्लक्षणलक्षिता प्रणयवसतिः प्रणयस्य स्नेहस्य वसतिर्वासः विदेहेन्द्रपुत्री विदेहानामिन्द्रः राजा जनकस्तस्य पुत्री सुता कारागारे

वन्दीगृहे… …दिशि दिशि प्रतिदिशं यामिकीराक्षसीभिः… …गाढ़ं रुद्धा आवृता परं केवलं निद्राविद्रावकबहुगलद्बाष्पधारा… …पुंवद्भावः प्रचुरं गलन्ती स्रवन्ती… वाष्पधारा लोतकधारा यस्यास्तादृशी सती कथं केन प्रकारेण भवेत् संप्रश्ने लङ् तत् प्रकारमहं न जानामि ॥

६१। पुनः प्रकारान्तरेण स्वप्रियाप्रेमातिरेकं कथयति। रामेति। या मासमरुचिमती माया लक्ष्म्याः समा समाना या रुचिः प्रीतिर्दीप्तिश्च अस्या अस्तीति तादृशी। इन्दिरालोकमाता मा क्षीराब्धितनया रमा इत्यमरः। रुचिः स्त्रीदीप्तौ शोभायामभिष्वङ्गाद्… …। क्रीड़ादम्भात् केलिकपटात्। कपटोऽस्त्री व्याजदम्भ इत्यमर। चिरतरं अतिशयेन चिरं चिरतरं निर्निमेषे निर्गता निमेषाः पक्षपाता यस्मिन् तादृशो दर्शने वीक्षणे सहसहचरी सहचरीभिः सहिता… … पुन. योग्यामहां योगमभ्यासं तनोति विस्तारयति। पुन सब्दार्थयोः शश्वत्। अभ्यासः खुरली,… …त्यमर ॥

६२। अद्येति। अद्य इदानीं प्राणप्रियसहचरी सा सीता सङ्गभङ्गात् एका … …द्दारिदु खातिरेका मद्विच्छेदेन विश्लेषेण आकुलितं संजाताकुलं यन्निजहृत् स्वहृदयं तत् दारयितुं शीलमस्य तादृक् दु खातिरेको बेदनाभरो यस्यास्तादृशी। ता वन्दीगृहे… …हरि हरि कष्टं कष्टं झरीप्रायनेत्राम्बुजाता झरीप्रायं प्रवाहभूतं नेत्राम्बुजातं लोतकजलौ… …किं वा किं वस्तु पश्येत् ब्रूहि कथय संप्रश्ने लिङ्। स्त्रियां झरिति धातुप्रदीपादि ॥

६३। श्रुत्वेति। ननु हे सखे, या सा मत्प्रिया तव गर्जनं गर्जितं श्रुत्वा तं जनं मत्वाऽवबुध्य त्रासात् भयात् मे मम कण्ठं गाढ़ोपगूढ़ं कण्ठं गाढ़मुपगुह्या… णमुल्। मुदं प्रीतिं वितरति मुत्प्रीतिप्रमदो हर्ष इत्यमरः। तत्तच्चेष्टाविशिष्टां कान्तां चिन्तयत्स्मरत् हृदयं असकृत् वज्रकल्पं अशनिसदृशं … …न शीर्णं न च दीर्णमपि। कथं केन प्रकारेण न शीर्य्यते न दीर्यते एतत्पापं न जाने ॥

६४। … …मत्प्रिया क्रीड़ावापीतटपरिसरे क्रीड़ार्थं या वापी कूपविशेषः तस्य तटपरिसरे तटप्रदेशे अखिलवयसां सर्वपक्षिणां रवैर्ध्वानैः तुन्दिलां पुष्टां दात्यूहानां

कालकण्ठकानां उरुतरगिरां अतिशयेन उरु··· ···सन्ततिं संचयं सानुरागं साभिलाषं शृण्वती सायं सन्ध्यायां.... ....सती कोकयोः चकोरयोः कोकी चकोरको विशेशः चकोरयोः वियोगं वियोगं वीक्ष्य दृष्ट्वा सकरुणहृदा··· ···पुनः दूनोति परितापं प्राप्नोति ॥

६५। कोकेति। या मत्प्रिया तदा संयोगकाले... ....प्रकारेण दूना दैन्यवती भवति दूना परवती च भवतीन्यन्वयः। शिव शिव... ....प्रियसहचरी सा तस्मिन् बन्दीगृहे अद्य इदानीं असह्येन सहितुमशक्येन... ...गिनापक्रुष्टेन उद्यता ज्वलता विरहशिखिना विच्छेदवह्निना दह्यमानाश्लिष्टा सती कथं केन प्रकारेण सा भवेत् संप्रश्ने सिङ् अहं न जानामि त्वं त्वयेति पूर्ववत्।

६६। पुनर्भङ्ग्यन्तरेण द्वाभ्यां पूर्वविलसितं··· ···। सखे कुत्रचिद्वासरे कस्मिंश्चिद्दिवसे सा मत्प्रिया सहसहचरी सह चरतीति सहिता अक्षैरक्षपाशैः दीव्यन्ती क्रीडन्ती भवनशिखिनौ गृहकेकिनौ शिखावलिशिखीकेकीत्यमरः। रन्तुकामौ क्रीडाभिलाषौ तं... .. लोपः। समीक्ष्य सम्यगालोक्य वासवासात् गर्भगृहात्। गर्भागारं वासगृहमित्यमरः। अपगतवती निष्क्रममाणा सती प्रमोदातिरेकात् हर्षातिरेकात् मे मम प्रेयसी निभृतनिभृतं मन्दमन्दं अन्ववादीत् अनुवदति स्म।.... ...।

६७। .... ....अत्रान्तरे अस्मिन्नवकाशे। अन्तर··· ···शावधिपरिधानान्तर्द्धिभेदतादर्थ्यो इत्यमरः। गुणगणनिधिः सा मया दृष्टा विलोकिता पृष्टाच। किमिति पृष्टेत्याकांक्षायामाह। भो भो हे हे प्राणप्रणयिनि . सातिपृष्टेत्यन्वयः एवंभूता सती नम्रास्याब्जा नम्रं नतमास्याब्जं मुखपद्मं यस्यास्तादृशी यतो लज्जा .... ... प्रमदजलधौ हर्षसिन्धौ मज्जते मे मम ... दूनोति परितापयति। हु विषादशुगर्त्तिष्वित्यमरः। सुखस्य वैपरीत्यकारित्वाद्विषाद चेति भाव ॥

६८। पुनः प्रकारान्तरेण द्वाभ्यां वर्णयति। आगच्छन्त्या इति। यौ मम ... ....शयनं शय्यामागच्छन्त्या आयान्त्या मत्प्रियायाः स्मरविजयितासूचकान् स्मरस्य कामस्य विजयितां विशिष्टजयं सूचयन्ती ज्ञापयन्तीति तादृशः डिण्डिमान् तत्कलान् मड्डु डिण्डिमझर्झरा इत्यमरः हंस हंसकयोः पादकटकयोः

स्फीतिनादान् प्रकाशरणितान्। हंसकः पादकटक इत्यमरः। पायं पायं पीत्वा पीत्वा सादरेण पुनः पुनः श्रुत्वेत्यर्थः। कर्णौ श्रुतिशरवाच्यौ अभूतामिति कर्ण-शब्दग्रहो श्रोत्र.... ....रुचिररसनाकिङ्किणीध्वानमिश्रान्। रसनाया काञ्च्याः किङ्किण्य क्षुद्रघण्टिकास्तासां ध्वानं ध्वनिस्तेन मिश्रान् युक्तान्। किङ्किण्यः क्षुद्रघण्टिका इति चामरः। किं च। हंसोत्तंसोल्लसदुरुगिरां हंसोत्तंसानां राजहंसवराणां उल्लसन्त्यः··· ···या गिरः वाच्यस्तासां मित्रभावं सौहृदं प्रपन्नान् प्राप्तान्। हंसवरमधुररवं हंसकनिनदश्रवणेन मम कर्णयुग··· ··· सफलत्वं प्राप्तेत्यर्थः॥

६६। इदानीं किमभूदित्याकांक्षायामाह। तस्मिन् प्रसिद्धे अस्मिन् गिरौ। अङ्ग हे मित्र। मे मम कर्णौ श्रोत्रतादुर्विधौ श्रोत्रतायां श्रुतिभावे दुर्विधौ दरिद्रौ श्रोत्रत्व.... ...नावित्यर्थः। उग्रं उत्कृष्टं वाधिर्यं बधिरतां यातौ प्राप्तौ। हा विषादः। कस्मिन् सतीत्याकांक्षायामाह। तस्मिन् पर्वते सरसि सरसि प्रतिसरः चक्राङ्गीनां हंसीनां सुरतिविरतिश्रान्तभावालसानां सुरतेः सुरतस्य विरतिः प्रान्त इति यावत्। सुरतान्त इत्यर्थः। तस्मिन् श्रान्तभावालसानां श्रन्तस्य भावः श्रमस्तेन अलसानां मन्दानां श्वेतपत्त्रजानां हंसानां हंसश्च श्वेतगरुतश्चक्राङ्ग-मानसौकस इति च। अमाने अमितध्वाने श्रवणविषये कर्णयोर्विषयीभूते सतीत्यर्थः॥

७०। पुनः प्रकारान्तरेण स्वस्मिन् प्रेयस्या अनुरागं प्रकटयन्नाह। त्यक्त्वेति। हे सखे। शक्रपुर्य्यां शक्रस्य इन्द्रस्य पुरी याताममरावत्या समानां पूः स्त्रीपुरीनगर्य्यौविति च। स्वीयां स्वस्य इयं स्वकीयां पुरमयोध्यां त्यक्त्वा विसृज्य त्रिदशवनितादुर्लभान् तिस्रो दशा येषां ते देवास्तेषां वनिता प्रेयस्य ताभिः दुर्लभान् दुष्प्राप्यान् भोगान् राजभोगान् दिव्यान् सुरुचिरान्। भोगश्चा पीत्यनेन त्यक्त्वा इत्यायातं या भा मा कान्ति श्रीः। अस्यां एतादृक्दुःखदायां हरिव्याघ्रससेवितायां हरयः सिंहव्याघ्राः शार्दूलास्तैः संसेवितायां अनुसृतायां बन-भुवि विपिनभूमौ पदे पदे मां अनुरक्ता अनुरागवती सती सिषेवे भजति स्म। एतादृक् वैराग्यहेतौ सत्यपि कदापि मय्यनुरागं न जहाविति भाव। कारणे सत्यपि कार्य्यानुत्पत्ते॥

७१।  मात्रेति। हे रुचिर सुन्दर। इह यात्रासमये अस्मिन् वनवासा-गमनकाले। अशेषैरनल्पैर्दोषैः सुदुःस्थं सुतरां दुःस्थं अरण्यवासं गन्तुकामा यातुमना सा……बहुशः बहुवारं निषिद्धा प्रतिषिद्धा यद्यपि तदपि तथापि सती साध्वी… …विदेहेन्द्रपुत्री जानकी उद्यत्प्रणयवलिता उद्यता प्रोज्जृम्भमाणेन प्रणयेन स्नेहेन वलिता विवशा भवत्या……या आसक्तिरनुरागस्तया। अस्मिन् वनवासे मामनुयाता अनुसृत्य गता सिषेवे सेवते स्म॥

७२  पुनर्भङ्ग्यन्तरेणानुरागं प्रपञ्चयन्नाह। इष्टमिति। हे मित्र सुभग! नृपवरसुता नृपस्य वरा या सुता जन्मद्योतनार्थं वरशब्दप्रयोगः। इष्टं स्वाभीष्टं मिष्टं शुद्धं मधुरं… …स्वादु एतादृक् वा दुर्मिलं अन्यैरलभ्यं अन्यत् वन्यं स्वादुद्रव्यं अनुपमं अतुलं नव्यं नूतनं वा द्रव्यं स्वयं नाश्नाति खेदे अपिच। सर्वमेतद्द्रव्यं प्रथमतः पूर्वं परेद्युः परेद्यवि वितरति ददाति। मिथः रहसि। मिथोऽन्योऽन्यं रहस्यपि अमरः॥

७३।  पुनराह। अस्तमिति। हे मित्र मृगाक्षी मृगस्य अक्षिणी इव अक्षिणी यस्याः सा शस्तं प्रख्यातं अस्तं चरमं गिरिवरं शैलश्रेष्ठं इने रवौ इनस्तु प्रभुसूर्य्ययोरित्यमरः। गन्तुकामे यातुमभिलषति सति उत्सुका उ… .. वतीति। पुनः पुनः अतिशयेन वदति इतीति किमित्याकांक्षायामाह। हे श्रीमन् श्रीर्विद्यते अस्येति श्रीमान् तस्य सम्बुद्धौ हे श्रीमन् ह्रीमन् लज्जावन्। मन्दाक्षं ह्रीस्त्रपा-व्रीडेत्यमरः। … … लक्षणमवगन्तव्यम्। उपासनां कुर्वतां अभिमतफलदाता-भिमतं वाञ्छितं फलं तद्ददातीति तादृक् इयं सन्ध्या सायं, सायं सन्ध्यापि-तृपप्रसूरिति च। वन्ध्या फलजननासमर्था यथा येन प्रकारेण माभूत् न भवेत्… …कराणामपवादः। हे आभूवलयतिलक भूवलयमिव भूवलयं भूमण्डलं भुवन … …आभूवलयं तस्य तिलकमिव आभूवलयतिलकस्तस्य सम्बुद्धौ हे आभूवलय-तिलक। द्राक् झटिति तथा तेन प्रकारेण भवता अपि त्वया… …कुर्वित्यर्थः। मम मनसि या याः क्रीड़ाप्रिया वर्त्तन्ते तत् सर्वं श्रीमता ज्ञातमेव। रात्रिरायातां सन्ध्यावन्दनादिकं शीघ्रं कर्त्तव्यमिति अपि कथं… …भाव इत्यवगन्तव्यम्। यतः ज्ञातहेतुविवक्षायामप्यादि कथमव्ययमि… …ल माला लक्षणं च। उत्सुका इत्यनेन कालासहनमुक्तं च। एतेन जानक्या उचितचातुरी-धुरीणता व्यज्यते॥

७४।        अद्येति। अवद्यात् युवतिविषयोक्तसर्वदोषात् अपगतवती अपेता सकलयुवतिकुलसामुद्रिकोक्तलक्षणानि.... ....। राज्ञः जनकनृपस्य प्राणकल्पा-त्मजाता प्राणतुल्या कन्या। गुणोघैः प्राज्ञानां सुधियां प्रकृष्टेन वराणां निकरैर्व्रजैर्माननीया पूजनीया। धीरोमनीषी ज्ञः प्राज्ञः। ... ....शोभा... ...। शोभाकान्तिद्युतिश्छविरिति च। शोभा सम्पत्ति पद्मासु लक्ष्मीश्रीरपि त्रिश्वत इति च। .... ....मरवधूसम्मता। सर्वे ये अब्दा महान्तः अमर... ...सम्मता। त्वमपि आत्मानमपि अनूनं अधिकं दूनं परितप्तं दधती......। कथं केन प्रकारेण स्यात् भवेत्॥

७५।        ......वेदनाभरं प्रकारान्तरेण द्वाभ्यां विषदयति। वामामिति। हे मित्र। जन्या अतिप्रियसख्य... ....अन्या इतरा अपि युवतयः रामाः श्यामा-यतकचभरां श्यामो......वामां सुन्दरीं कान्तानन्तातुलगुणवतीं कान्ता मनोरमा अनन्ता अमिना अतुला अनुपमा गुणास्ते विद्यन्ते अस्या इति तादृशीं.... .... द्वाभिरद्भिर्जलैः संभृतैः संपूर्णैः कनककलशैः स्वर्णकुम्भैः संभ्रमणे त्वरया स्नाप-यन्ति स्नानं कारयन्ति॥

७६।        सम्मेति। किं च। सन्मा सती साध्वी मा शोभा यस्यास्तादृशी ......तद्यथा......दिव्यभोगोचिता स्वर्ग्यभोगार्हा यतः मे मम प्रियसहचरी भार्य्या पत्नी भर्त्तृदैवावलीनां भर्त्ता दैवामिव कमनीय आसां भर्त्तृदै... ...। रम्भायाः मोचायाः... ....दम्भो गर्वस्तस्य अपह्नुतौ नाशे कुशला चतुरा। एवं विशेषण-विशिष्टा... ....कुम्भद्वयं कुचौ स्तनौ स्नापयन्ती स्नानं कारयन्ती सती कथं.... . हा कष्टं पूर्ववत् संप्रश्ने लिङ्॥

७७।        पुनः प्रियाविलसितं विस्तारयन्नाह।... ...उदयक्ष्माभृतः। क्ष्मां विभर्त्तीति क्ष्माभृत् उदयनामाक्ष्माभृत् मध्यपदलोपी समासः। उदयाचलः। तस्य कान्तं रम्यं सानुं शृङ्गं यान्तं गच्छन्तं भानुं रविं वीक्ष्यमाणा.... ... दिवसगणनातत्परा दिवसानां वासराणां गणना सख्यानं तस्यां तत्परा.... .. प्रधानं यस्यास्तादृशी। सा मत्कान्ता राक्षसीनां कोणपीनां लोकात् जनात् भयमुपगता .... ...तयोरित्यमरः। सन्ततं विरहदहनज्वालया वियोगाग्निशिखया दग्धा प्लुष्टा सती कथं केन प्रकारेण स्यात् भवेत् हा कष्टं पूर्ववत्॥

७८। शुद्धेति। .... ....केवला इत्यमरः। इमां राजपुत्रीं जनककन्यां पुरस्तात् पुरतः शुद्धाबद्धाञ्जलिनतिः.... ...अञ्जलि सा यस्यां तादृशी नति.... ... स्तुतिं कुर्वन्ति दैवात् विधियोगात् सैव राजपत्नी नुता एव नान्येत्यर्थः। श्यामा तप्तकाञ्चनवर्णा ... .. मामनुलक्ष्यीकृत्य आकलितं वर्द्धितं हृदयं यस्याः सा .. ....आसुरीभिः राक्षसीभिः तैस्तैर्वचोभिः भर्त्सनीया तिरस्करणीया इन्त कष्टम् ॥

७९। एतैरिति। हे ललित हे सुन्दर. ललितं सुन्दरं त्रिष्विवत्यमरः। स्वैः स्वकीयैः मदीयैरिति यावत् अभिज्ञानभूतैर्लक्षणभूतैः कचभरः कुन्तल... ... व्यक्तितवु इति मेदिनी। सत्त्वात् तथ्यमाकलय्य ल्यबलोपे पञ्चमी। इह यत्कथयामि अत्र मत्कथनविषये दत्तावधानः दत्तं अवधानं ऐकाग्र्यं येन तादृक् सन् भ्रातृजायां भ्रातुः वल्लभां राजपुत्रीं राजकन्यां ·· . स्वं स्वकीयं मनश्चित्तं पृष्ट्वा आपृच्छ्य तनुतरपयोधारया तनुतरा क्षीणतरा पयोधारा जलधारा यस्यास्तादृशीं तया नद्या सरिता सह बद्धसख्यां बद्धं सख्यं यस्या··· ···॥

८०। एवमिति। हे जलधर, शरत्पूर्णचन्द्राननाया... ....पूर्णचन्द्रस्त-त्कल्पमाननं यस्यास्तादृशी तस्याः मध्यपदलोपी समासः। .... ...स्तासामावलीनां ... ...अशेषं भावं मानसे कृत्य मनसि .. .. अमत्तः सावधानः अतएव यतः ... ...मम बुद्ध्वा ज्ञात्वा गुणगणात् रूपरेखां.. ...बुद्धिर्मनीषा धीषणा धी प्रज्ञा समुषीमतिरित्यमरः। संशयाभावं निर्णयं नये .... ...नारीत्यादिना.... ...।

८१। प्रेयस्या विरहवेदनातिशयं वर्णयित्वा तदनन्तरं यात्रोचितमङ्गलादि ... ...गच्छेत्यादि हे प्रियसख। हे स्वच्छ अकुटिल। गच्छेत्यादिप्रार्थनायां लोट्। मत्सन्देशं नय। ते गच्छतस्तव पन्थानः अध्वान... ...भवन्तु तव वर्त्मनि मङ्गलानि सन्त्वित्यर्थः। आशिषि लोट्। इह प्रयाणे यात्रायां ये ये ये इत्यर्थः। नानान्तराया. अनेकरूपप्रत्यूहाः। विघ्नोऽन्तरायः प्रत्यूह इत्यमरः। ते ते... ....प्राप्नुवन्तु प्रशंसायां लोट्। किं च। उदकैर्जलैः पूर्णं संभृतं कलशं घटं तूर्णं द्रुतं अग्रे पुरतः पश्य पूर्ववल्लोट्। किं च एकीकृत घनस्वः केवलीकृत-सान्द्रध्वनिः एष पुरोवर्त्ती केकी दक्षः प्रेरयति दौत्ये यातीति प्रोत्साहयति ॥

८२। स्वस्तीति। हे प्रियसख अत अस्माद्धेतोः अगस्त्यं अगस्ति-सम्बन्धिनि दिशं ककुभमनुलक्ष्यीकृत्य मत्प्रियार्थे अनन्ते आकाशे… ….स्वस्ति अस्तु। नमः स्वस्तीत्यादिना चतुर्थी। अनुपदं पदमनतिक्रम्य प्रतिपदमित्यर्थः …. ….इह अस्मिन् गमने ते तव दिगीशाः दिक्पाला… भवेयुः। आशिषि लिङ्। किं च मे मम कर्मप्रकरजनितः कर्मणां प्रकरैः निकरैः जनितः जातः धर्मः। सर्वतः समन्ततः भवन्तं त्वां पातु रक्षतु। प्राग्वल्लोट्। किं च सेवाकलित सेवया समभजनेन कलिता उदिता करुणा दया येषां तादृशो देवाः त्वामवन्तु पालयन्तु प्राग्वत् ॥

८३। भवतु नाम केन मार्गेण गच्छामीत्याकांक्षायामिति। हे सौम्य हे सुन्दर कथयतः सप्रपञ्चं मार्गमभिदधतः मत्तः मत्सकाशात् पञ्चम्यास्तसिल्। तथ्यं यथार्थं पथ्यं हितकारि वर्त्म मार्गं शृणु आकर्णय। प्रार्थनाया लोट्। विकाशन्मल्लीवल्ली… ….मल्लिवल्यः मल्लिकालतास्तन्निभ रुचिराणि रम्याणि शिखराणि यस्य तादृशः कूटोऽस्त्रीशिखरं शृङ्गमित्यमरः। अस्मात माल्यवत् भृभृतः माल्यवन्नाम पर्वतात् शुभ्रेतररुचि शुभ्राः शुक्तिस्तस्मादित… …शुक्ल-शुभ्रशुचिश्वेत इत्यमरः। तस्य प्रभा रुचि… …। अभ्रे व्योमे चरन् गच्छन् उत्सुकानामुत्कण्ठावतां गोदुहां गोपानां गोदुहाभीरवल्लभा इति च। हल्लीशक-वलितदृक् पल्लो गोधुक्… … योगः… … स्त्रीणां तु मण्डलं नृत्यं विदुर्हल्लीशकं बुधा इति लक्षणात्। तस्मिन् वलिता दत्ता दृक् दृष्टिर्येन तादृक् मन् मन्दं शनैः प्रयायाः प्रयाणं कुर्य्याः। पुनः पुनः दर्शनेन मङ्गलगीतवाद्यादिश्रवणेन च कार्य-सिद्धिर्भवतीति भावः। पूर्ववत् वृत्तिच्छेकानुप्रासः। प्रार्थने लिङ्।

८४। पुन प्रयाणं प्रपयन्नाह। सत्येति। अपि च। हे सौम्य विद्युता चञ्चलया समं सह गत्वा गमनेन खं नभः मण्डयन् शोभयन् गच्छन् प्रयाणं कुर्वन् त्वं भवान् मम हि ममैव कुशलं मङ्गलं इच्छन् वाञ्छन् हे योगिनां योगिदातः एतत् पदद्वयं तन्त्रेणोपात्तम्। योग एषामस्तीति योगिनः योगित क्रियाः पुंस्येवेत्येकशेपः। अविच्छिन्नाः कामिनस्तेषां योगस्य मेलनस्य दाता वितरणशाली तस्य सम्बुद्धिः। मेघदर्शनेन योगिनां संश्लेषो भवतीत्यभिप्रायेण अथ च योगिनामष्टाङ्गयोगवतां योगो ध्यानं द्यति खण्डयतीति योगदस्तस्य च सम्बुद्धिः। अतो हेतोर्भवतः मम कुशलेच्छासामञ्जस्याय भवेदिति भावः। सत्या

प्रीत्या मत्या बुद्ध्वा स्मरहरवधू तुल्यसल्लक्षणायाः। स्मरः कामः हरः शिवः तयोः बध्वा -- ....तुल्यानि.... ....सल्लक्षणानि साधुचिह्नानि यस्यास्तादृश्या मत्प्रेयस्याः प्रियायाः इक्षादीक्षावलितहृदयः इक्षा... .. सैव दीक्षा नियमस्तया वलितं हृदयं ··· ···चित्तं यस्य तादृक् हे सौम्य सौख्येन सुखेन गच्छेः यायाः ॥

८५। तव प्रयाणे पूजापि भविष्यति इति प्रोत्साहयन्नाह आप्तमिति। हे रुचिरम् रुचिं प्रीतिं राति ददातीति रुचिरा अभिलाषदायिनीत्यर्थः मा शोभा यस्य तादृक् तस्य सम्बुद्धिः। त्रिजगन्मोहनलक्ष्मीसन्निधिरित्यर्थः। वक्ष्यमाणश्रीकृष्ण-सादृश्यमूर्त्तिमित्यवगन्तव्यम्। अहो अभ्र, आश्चर्य्यजनकमेघ! कृषिफलं कृषेः कर्षकस्य फलं साध्यं त्वयि भवति आयत्तं त्वदधीनं इति वदन्निति शेषः। ग्राम्यलोकः ग्रामे भवः ग्राम्यः स चासौ लोकश्चेति जनपदजनः। प्राञ्जलिरुद्यता-ञ्जलि.... ... मुत्प्रीतिः प्रमोदो हर्षः प्रमोदामोदसम्मदा इत्यमरः। त्वां अवश्यमसंशयं प्रणमतु नमस्करोतु प्राप्तकाले लोट्। तेषामयमानन्दकालः प्राप्त इत्यर्थः। कीदृशं त्वां आप्तं जगतो हितं द्विवि नभसि प्राप्तं गतं मातङ्ग इव तादृशं बलवान् मन्द-गतिं मरुत् सेव्यमानं मरुता अनुकूलपवनेन सेव्यमानं सेवितं किं च तादृक् हस्ताञ्चितदृशां नेत्राणां सहस्रं दशशती तेन अञ्चितं पूजितं सादरं दृष्टमूर्त्ति-मित्यर्थः। एतादृक् विशेषणविशिष्टं तं प्रसिद्धं... ....केवलं जिष्णोरिन्द्रस्य मूर्त्ति ... ....जिष्णोर्लेखर्षभशक्र इत्यमरः। स्त्रियां मूर्त्तिस्तनुस्तनूरिति च। लिङ्ग-विपरिणामेन जिष्णुमूर्त्तिः कीदृशी··· ···द्विवि प्राप्तां स्वर्गतां अमणीविलासे... .... संप्राप्तामित्यर्थः। अतएव अभ्रमातङ्गयान्तं अभ्रमातङ्गेन ऐरावतेन यान्तं। ऐरावतेऽभ्रमातङ्गे रावणाभ्रमुवल्लभा इति च। मरुत्सेव्यमानैः सेव्यमान मारुतौ पवनामराविति च। दृक् सहस्राञ्चितं नेत्रदशशत्यामहितं सहस्रनेत्रबर। प्रस्तुता-प्रस्तुतश्लेषः ॥

८६। सत्यमिति। हे शम्पासहचर, विद्युत्सहचर। गत्यन्तरविरहिते अन्या गतिगत्यन्तरं तेन विरहितेन अनन्यगतिक इत्यर्थः। किं च शरण्यं शरणे साधुस्तादृशं गते प्राप्ते शरण्याश्चनीत्यर्थः। प्रीतिपात्रे प्रीतेः स्नेहस्य पात्रे योग्ये। पात्रं तु भाजने योग्ये पात्रं तीरद्वयान्तरे पात्र.... ...निर्झरापो निर्झराणां प्रवाहानां अपः जनानि। प्रवाहो निर्झरो झर इति च। निपीय पीत्वा। पाङ् पाने इत्यस्माद्धातोऽन्तस्थाने ल्यप् भायाः प्रभायाः प्रथमनिलय-

मादिगृहं··· ···भा गता इति भावः । मद् प्रियां मम वल्लभां मार्गमाणः अन्वेषमाणः प्रायाः गच्छेः। प्रार्थनायां लङ् । ·· ···मत्प्रार्थनेन मम वाचानुसारेण गच्छेत्यर्थः। आद्यानुप्रासशब्दालङ्कारः ।··· ···यद्वर्णावृत्तिरनुप्रासः पादेषु च पदेसु च। पूर्वानुभवसंस्कारबोधिनी यद्यदूरता ॥ इति ॥

८७। पुनर्मेघस्य महत्त्वप्रतिपादनाय महत्साम्यं प्रतिपाद्य प्रस्तौति। अद्रेरिति। हे क्षुद्रं तर। क्षुद्रं वहुलग्रहणात् समासः। हे अधातुक क्षुद्रस्तु धातुके हिंसे इति मेदिनी। योगाभोगात् योगानामष्टाङ्गयोगानामाभोगात् परिपूर्णत्वाद्धेतोः मुदितहृदयः योगिनः कृष्णं श्याभवर्णं एतं त्वां वीक्ष्य दृष्ट्वा कृष्णशब्द ·· णोपात्तः कृष्णं नारायणं स्मरेयुः ध्यायेयुः प्राप्तकाले लिङ् । सदृशमेघदर्शनेन सदृशकृष्णस्मरणका .. के इत्याकांक्षायामाह । सदृशाकृष्टचिन्ताद्या स्मृतिवीजयस्य बोधका इति... ....के इत्याकांक्षायामाह । सादृश्यधर्मान् विषदयति अद्रेः माल्यवतः दिवि नभसि गतं प्राप्तं अनन्ताभिख्यं अनन्त··· · सम्बन्धं दिवि स्वर्गमेव गन्तव्यम्। किं च पीताम्बरं पीतयापीतमाच्छादितमिति यावत् अम्बरमाकाशं येन तादृशं सवितृव्याप्य स्थितमित्यर्थः। अन्यत्र पीतं··· ··· यस्य.... किं च अनन्ताभिख्यं अनन्तस्य सुरवर्त्मनः अभिख्या शोभा यस्मात् तादृशम्। अनन्तं सुरवर्त्मगं अभिख्या नाम शोभयोरिति चामरः। अनन्तस्य शोभासम्पादकमित्यर्थः। अन्यत्र अनन्ता असिता अभिख्या नामानि यस्य। अभिख्या यस्य इत्यत्र··· ··यस्य वा तादृशं किं च भुवनसदनं भुवनानां जलानां सदनं गृहं जलभूरिति ·· ···। अन्यत्र भुवनानां जगतां सदनं कुक्षिस्याखिललोकत्वाज्जगन्निवासमित्यर्थः। किं च कम्बुचक्रश्रियाळ्यं.... तादृशं.... ... गणस्य या श्रीः शोभा तया आद्यं सम्पन्नं, हास्तिकलक्ष्मीसंनिधानमित्यर्थः। कम्बुचक्रश्रियाळ्यं कम्बु शङ्खं चक्रं सुदर्शनं तयोः श्रिया आळ्यं, किं च अङ्के दीव्यत्स्वरुचिविलसत् .. ... दीव्यन्ती स्वरुचिभिर्निजकान्तिभिः विलसन्ती शोभमाना चञ्चला विद्युत् यस्य तादृशम्। अन्यत्र अङ्के उत्सङ्गे दीव्यन्ती स्वरुचिविलसच्चञ्चला निजकान्तिः··· ···श्लेषः। ··· ···अतएव कृष्णधर्मवर्णनम् ॥

८८। पुनर्मार्गचरितं वर्णयति। सद्य इति । दुर्दिनेषु मेघाच्छन्नेऽह्नि दुर्दिने··· ···रयेव अम्भः जलानि दधत् । सद्यस्तत्क्षणं विद्योतितनिजरुचा विद्योतिता प्रकाशिता निजसकलद्रव्याणां रुक् कान्तिर्यस्या तादृश्या विशेषणविशिष्टा

……दृष्टः मार्गः पन्था याभ्यस्तादृश्य कालागुरुणा कृष्णागुरुणा विरचितं लेपनं याभिस्तादृश्यः ताः……सकेतवासान् सङ्केतं वसती केन सुखेन मुखशीर्षजलेपु कमिति मेदिनी। नयेः प्रापयेः अहं शङ्के……॥

८९। नन्विति।……नभसि……नभः श्रावणिकश्च इत्यमरः। प्रत्यासन्ने निकटागामिनि सति शशधरे चन्द्रे इव चण्डांशुके चण्डास्तीक्ष्णा अंशवो……प्रियसख……स्तस्य सम्बुद्धौ। स्तोकमेव कं शिरोऽस्य स्तोककः। ……कयतेऽधो रात्रिमन्यः दिनं दिवसमपि। केलिसद्म केलिगृहं अधिवसन् केलिगृहे वसन्। उपाङ्ध्याङ् वस इति……॥

९०। पुनः प्रकारान्तरेण मार्गं वर्णयति। तुङ्गैरिति।……तुङ्गैः उच्चैर्दशशतमितैः सहस्रपरिमितैः कञ्चनैः कनकैः रत्नकान्तैः मणिरम्यैः शृङ्गैः शिखरैर्गुरुतरुचं……अप्सरोभिश्च सेवितं सेव्यमानं किंच धातुव्रातैः सप्तधातुचयैः विविधतरुभिः नानाप्रकारवृक्षैः पक्षिसंघैः……विन्ध्यं पश्येरित्यन्वयः। विधौ लिङ्॥

९१। हर्ष इति। हे जलद! सोऽपि शैलराजः शैलानां राजा शैलराजः हर्षोत्कर्षोल्लसितहृदयः हर्षस्य आनन्दस्य……चित्तं यस्य तादृक् ततः प्रवेशात् शिरसा अग्रभागेन……अभ्यागतमतिथिं क्लान्तं श्रान्तं त्वां भवन्तं वक्ष्यति धारयिष्यति। कीदृशमित्याकांक्षायामाह अमृतकलितयापी…… प्रशमितः शान्तिं प्राप्तः दवस्य वनाग्नेः अपप्लव उपद्रवो येन तादृशं, कीदृशः सन्। जीमूताख्या प्रकटितसुहृद्भावतः। जीमूतो मेघपर्वतावित्यमरः।……भिधानं च नामधेयं च नामकेति च तया प्रकटितः प्रकाशितः यः सुहृद्भाव…… तस्मात् ततः पञ्चम्यास्तसिल्। श्रद्दधानः श्रद्धावान् सन् सन्नित्यन्वयः।

९२। ……कोविद बुध इति च। हे पूजित इति वा।……प्रशस्तेऽभ्यर्हितेऽपि……। हे साधो सुचरित त्वं कामं यथेष्टं तान् प्रसिद्धान्…… शिखिनः केकिनः……आश्वासयेः अश्वासनां कुरु। तत्करोति……वातैः पवनैः शीकराणामम्बुजकणानां शीकरोऽम्बुकणः स्मृतः।……भावं प्रपन्नान् प्राप्तान्

.... ...नृत्ये नर्त्तनकृत्ये कर्मणि निहितमनसः निहितं दत्तं मनो यैस्तादृशाः। किं च स्वप्रियाकेलिखिन्नान् स्वप्रिया... ....मन्दानन्दान् अल्पहर्षान् यतः सहृज-सुहृदः अकृत्रिममित्राणि। मित्राणां क्लेशहरणं महोन्नतानामुचितमिति भावः॥

६३। गोदेति। हे मित्र एष.... ... स्वस्मिन् याः सरितो नद्यः तेषा-मुदकमाद्यं येषां तादृशाः तैः सुखैः सुखकरैरुपचारुपकरणैः पाद्याद्यैः। परमुत्कृ-ष्टमतिथिं अवश्यं निश्चयेन सत्करिष्ये... ...। गोदाच्छोदाहरणगुरुतां गोदायाः गोदावर्य्याः अच्छोदानि निर्मलानि यानि ·· ··तेषामार्द्र.... ....वहने या गुरुता गौरवत्वं बिभ्रत ...श्रान्तस्य अन्तः स्नुभुवि उपरि प्रस्थभूमौ.... ....मिलतः प्राप्तस्य सौहार्द्देन सुहृदत्वेन हेतोरित्यन्वयः ... ....॥

६४। ··· ···प्रतिपादयन्नाह। संतप्तानामिति। अमृतप्रार्थिनी अमृतं प्रार्थयितुं शीलमस्या.... ...प्रसिद्धा प्रसिद्धप्रकान्तानुभू.... ....स्वार्थेषु तच्छब्दो यच्छब्दः.... ....द्विजालिः पक्षिणः... ... द्विजा इत्यमरः। गिरिभुवि पर्वतभूदेशे भवन्तं त्वां वीक्ष्य दृष्ट्वा परमुत्कृष्टमानन्दं आतन्वाना विस्तारयन्तः त्वां कीदृशं ईनाद् सूर्य्याद् भवतीति ईनभूर्यस्तापस्तस्माद् ... ...संज्वरो समाविति च। शरणं रक्षितारं शरणं गृहरक्षित्रोरिति च। शित्याभाढ्यं··· ···शोभा सम्पन्ना... .... काविति च। रतिसहचरोद्धर्द्धनं रते....सह....। कालिकेशं कालिकाया मेघ जालस्य ईशं ... ...मेघजालं च कालिका इति च। लसन्नीलकण्ठ शोभमानमयूरं एतादृग्विशेषणविशिष्टं भवन्तमित्यन्वय.। अन्यत्र.... ...द्विजानां विप्राणां... .... आलिः राजिः··· ·· यावत्। आतन्वाना विस्तारयन्तः। शिवं.... .. ईन-भूनापतः इनाद् सूर्य्याद् भवतीति ईनभूयमस्तस्माद् यस्तापः सन्तापः.... .... त्रासभाजां भयप्राप्तानां अतः सन्तप्तानां सम्पन्नं किं च रतिसहचराद्धर्द्धनं रतिसहचरः स्मरः तं वर्द्धयति छेदयतीति ल्युट्। तादृश कामनाशक इत्यर्थ। किं च कालिकेशं कालिकायाः दुर्गाया ईशं कान्तं, किं च लसन्नीलकण्ठं नीलः कण्ठः··· ···तं भवं ·· ···त्यन्वय। प्रस्तुताप्रस्तुतश्लेषः।

६५। पुनः प्रकारान्तरेण श्लोकद्वयेन घनस्य महिमानमुत्पादयन्नाह। श्रीमन्निति। हे श्रीमन् घन,... .. जनः का चन.... .. त्वां शिवं मङ्गलकरं शिवं महादेवं कलयतु मनुतां नाम। सम्भावनायां लोट। त्वां कीदृशं

वृषासक्तरागं वृष्णि महेन्द्रे आसक्त. लग्न. अनुरागो यस्य तादृशं गिरिभुवं कोदृशीं स्वम्बराच्छादनान्तां.... ....तेन अन्तां रम्यां सर्वतो व्याप्य स्थितामिति भावः। किं च नूत्नैरभिनवै रत्नै पद्मरागमणिभिः। प्रत्यग्रोऽभिनवो नव्यो... ....कटकानि सानूनि यस्यास्तादृशीं अस्यां नवानि रत्नानि जायन्ते इत्यर्थः। कटकं... ...अतः स्फीता वर्द्धमाना शोभा कान्तिः यस्यास्तादृशीं किं च ललित-शिखरभ्राजमानद्विजालिं··· ···वृक्षाग्राणि तेषु भ्राजमाना देदीप्यमाना द्विजालयः पक्षिराजयः यस्यास्तादृशी.... ....कक्षापुलककोटिषु। पत्रवदाडिमवीजाभः...... माद्यन्तो मत्ता ये पञ्चाननाः सिंहास्तेषां गति आश्रयम्। सिंहो मृगेन्द्र पञ्चास्य इत्यमरः। किं च प्रोल्लसन्मेखलाढ्यं प्रोल्लसन्त्यः.... ...तीव कान्ता या मेखलाः शैलनितम्बास्ताभिराढ्यां सम्पन्नां मेखला खड्ग.... ...विश्वः। इभ्य आढ्यो धनीस्वामीत्यमरः॥

८६। किं च। ननु हे मित्र! शशभृतां शशं हरिणं बिभर्त्तीति क्विप् तादृशा चेति। राजमौलिं राजन्तो मौलिः शिरोभूषणं यस्यास्तादृशी। किं च एकदन्तप्रसूतां एके मुख्या ये दन्ता निकुञ्जास्ता... ....किं च। रुचिगृहैः रुचीनाम-भिलाषानां गृहैः गृहेण। गृहाः पुंसि च भूम्न्येवेत्यमरः। अतः एकवचनेऽपि पुंलिङ्ग-बहुवचनप्रयोगः दारशब्दवत् तथा कलागृहैरिति नैषधप्रयोगश्च। चन्द्र-कान्तेन ...कमनीयेन। चित्राढ्येन चित्रमद्भुत तेन आढ्येन सम्पन्नेन एवं विशेषणविशिष्टेन मुखेन अग्रभागेन लक्ष्मीं शोभां आतन्वानां विस्तारयन्तीं किं च गेहामोददात्रीं गुहाभिः कन्दराभिः मोददात्रीं... ....सुभृद्भुवं प्राप्तं त्वां मानुषमिति प्रकृतेऽन्वय.। अप्रकृते तु लोकः भूभृद्भुवं पार्वतीं प्राप्तं शिवं कलयतु। भूभृद्भुवं कीदृशीम्। रुचा प्रभया विशिष्टां किं च स्वम्बराच्छादनान्तां सुशोभनं अम्बरं स्वम्बरं रम्यं ...नूत्नैः प्रेरिकै शोणितैरिति यावत् रत्नैर्मणिभिः रुचिरकटकां रुचिराणि कटकानि वलयानि यस्यास्तादृशीं .. शोभां ... ...ललितशिखरभ्राजमानद्विजालिं ललितानि यानि शिखराणि माणिक्यशक-लानि तद्वत् भ्राजमाना द्विजालिर्दन्तपङ्क्ति यस्यास्तादृशीं किं च माद्यत् पञ्चा-ननः सिंहः··· स्तेषां पतिमाश्रयं यद्वा सिंहानां गतिरिव गतिर्यस्याः। यद्वा माद्यन् मत्त. यः पञ्चाननः शिव. स एव पतिराश्रयो यस्यास्तादृशीं किं च प्रोल्लसन्मे-खलाढ्यां प्रोल्लसन्ती या मेखला काञ्ची तया आढ्या किं च। शशभृता... .... शोभनं किरीटं यस्यास्तादृशीं किं च। एकदन्तप्रसूता एकदन्तो हेरम्बस्तं प्रसूत

इति तादृशी। अप्येकदन्तहेरम्ब इत्यमरः। किं च रुचिगृहैः कलावासेन चन्द्रकान्तेन चन्द्रवत्कमनीयेन। चित्राढ्येन चित्रचित्रकं तिलकं.... ...सम्पन्नेन। मुखेन वदनेन लक्ष्मीं शोभामातन्वानां मुखं निःसरणे वक्त्रे प्रारम्भोपाययोरपि सन्ध्यन्तरे नाटकाक्षे शब्देपि च नपुंसकमिति मेदिनी। किं च गुहामोददात्रीं गुहस्य सेनान्यः आमोद.... ....शिवं कीदृशं वृषसक्तरागं वृषे वृषभे आसक्ताः लग्नाः रागोऽनुरागो यस्य तादृशं एतादृक् विशेषणविशिष्टां गिरिभुवं प्राप्तं त्वां शिवं कलयत्वन्वयः। प्रस्तुताप्रस्तुतश्लेषः॥

६७। क्रमेण मार्गं वर्णयति। कृष्णेति। हे अभ्राधिप मेघराज! सिष्णास्वखिलवृजिनध्वंसिनी स्नातुमिच्छवः सिष्णासवस्तादृशां अखिलानि यानि वृजिनानि तानि ध्वंसितुं विनाशयितुं शीलमस्यास्तीति··· ···कान्तमूर्तिः कमनीयतनुः यद्वा के जले रन्ता रम्या मूर्तिस्तनुर्यस्यास्तादृशी। मृतावविशिते रम्ये त्रमाप्ता वन्त इष्यत इति शब्दार्णवः। दिव्या मनोहरा··· ....आयतलहरीभिः तरङ्गैर्विशिष्टा तैर्दिव्या वा। भुवि भूलोके शर्मदा सुखदा इह पर सुखदात्रीत्यर्थः। नर्मदा एतन्नाम नदी च। प्राणीनां जन्मीनां प्राणी तु चेतनो जन्मीत्यमरः। देवालयवितरेण। देवालयस्य स्वर्गस्य वितरेण.... ...स्पर्शनं प्रतिपादनं इति च। उत्सुकत्वं कालासहनत्वं कालासहनमौत्सुक्यमिति च। बिभ्राणा दधाना रेवा नदी च। मयि मज्जन्तुकदम्बकं स्वर्गं कदा दास्यामिति औत्सुक्यवतीत्यर्थ। ननु हे मित्र.... .. शतद्रु नाम्नी बाहुदा नाम्नी नदी च इत्यन्वयः॥

६८। नद्य इति। एता नद्यः सद्यस्तत्क्षणं उपगतं प्राप्तं प्रियं त्वां चिरविरहिताः चिरं विरहिताः विरहं प्राप्ताः चिरबिरहिण्य इत्यर्थः। एवं भूता सत्यः तरङ्गैः बाहुभिः कान्तं कैर्जलैरन्तं रम्यं कान्तं नायकं शिलष्ट्वा आलिङ्ग्य हातुं त्यक्तुं न उत्सहे उत्साहं न कुर्युः। प्राप्तकाले लोट्। त्वं च भवानपि हे सुभग प्रियानुरक्त! एतासां नदीनां तनुतां कार्श्यं... ....तापं नाशयेः नाशं कुर्याः, उक्तमर्थमर्थान्तरन्यास... ....। तथा हि प्रेयसाः प्रेयसी च प्रेयांश्च प्रेयसोः तयोः। अन्योऽन्यं परस्परं... ...उदयति शोभते स्फुट प्रकाशं लोके.... .... प्रणयिन्याः स्नेहोदयस्तस्यां तस्य चेज्जगति शोभत इति ख्यातमिति भावः॥

६९। पुनः प्रकारान्तरेण विलासं प्रपञ्चयन्नाह। आतन्वानामिति। अथानन्तरं भो सुभग। लोकः जनः तदा तस्मिन् काले कामं यथेच्छं इक्षणेन

दर्शनेन आमोदभाक् सन् त्वां कलयतु पश्यतु। प्राप्तकाले लोट्। जनस्य दर्शनानन्दकालः प्राप्त इत्यर्थः। त्वां कीदृशं सीरपाणिप्रमोदं सीरः शब्दः दन्त्यादिः। सितसीरसायकाविति सभेदात्। सीरपाणीनां कर्षकाणां परमं प्रमोदं उत्कृष्टं हर्षं आतन्वानं विस्तारयन्तं, किं च लोके सम्बरस्य उच्चैर्दानेन जलस्य अधिक वित्राणनेन अतिसुखकरं सौख्यातिशयं.... ....बौद्धव्रतविशेषयोः विशेषे पुंसि दैत्यस्य मत्स्यस्य हरिणस्यचेति दन्त्यादौ रभसः शम्बरो हरिश्च दैत्ये शम्बरं सलिलं स्मृतमिति तालव्यादावजयः। किं च। जिष्णोः जयशीलस्य विष्णोर्भगवतस्य गृहं पदे विष्णुपदे नभसि रुचिगृहं प्रीतिसद्मा। अतएव लक्ष्मीभुवं शोभास्थानं भूः स्थानमात्रे कथिता धरण्यामपि योषितीति मेदिनी। एवं विशेषणसामर्थ्यात् कामपदप्रयोगाच्च अप्रस्तुते कामप्रतीते प्रस्तुताप्रस्तुत.... ....लोकः त्वां कामं मारं कलयतु मनुतां लोकः कीदृक् लक्षणेन.... ....तदामोदभागी तस्मिन् कामे य आमोदः हर्षः स एव भागो भाग्यं विद्यते अस्य तादृक्... ...कामं कीदृशं सीरपाणि प्रमोदं सीरं पाणौ यस्य तादृक्... ....परमप्रमादं मुदमातत्वानं किं च सम्बरस्य सम्बरो नाम्नो दैत्यस्य दानेन खण्डनेन। रतिसुखकरं रत्या निजपत्न्याः सुखकरं सौभाग्यं.... ....हे सुभग वन्दाभूय स्थितां निजपत्नीं रतिं तमसुरं हत्वा आनिनायेति पुराणकथा। तस्माद्रतिसुखकरमिति भावः। किं च जिष्णो. विष्णोः निजतातस्य पदरुचिगृहं पदं पाद एव रुचिगृहं अभिलाषसद्म तस्य तादृक्। लक्ष्मीभुवं लक्ष्म्याः रुक्मिणीरूपिण्या. भवतीति तादृशं 'राघवत्वे भवेत्सीता रुक्मिणी कृष्णजन्मनीति' विष्णुपुराणवचनात् रुक्मिण्या लक्ष्म्या त्वमित्यवगन्तव्यम्।

१००। पुनर्भङ्ग्यन्तरेण मार्गं चरितं प्रपञ्चयति। गन्तव्य इति मित्र तदनु तदनन्तरं मलय. मलयनामा गिरीन्द्रः ते गन्तव्यः। कृत्यानां कर्तरीति षष्ठी। मलय. तादृक, अभ्रंकषाग्रैः अभ्रं नभः कषन्ती लिखन्तीति तादृशानि अभ्रंकषाणि अग्राणि येषां तादृग्भिः। सुस्थैः सुखेन स्थीयते इति तादृग्भिः प्रस्थैः सानुभि। प्रस्थः सानुरस्त्रियामित्यमरः। विषिष्टः। नवकुसुमितैः नूतनपुष्पितैः वीरुद्व्रातैलतासमूहैः मत्तकूजत्पतङ्गैः मत्ताः कूजन्ता शब्दायमाना पतङ्गाः पक्षिणः येषु तादृक पदं शब्दे च व्याक्ये च व्यवसायापदेशयोः। पाद तच्चिह्नयो स्थानप्राणयोरङ्कवस्तुनोरिति विश्व। .... ....पुष्पितानोकहानां पुष्पिताः संजातपुष्पाः ये अनोकहाः वृक्षा.... ....शाल पलाशी द्रुमागमा इत्यमर दिशि दिशि प्रतिदिशं

वारैः संख्यैः विविधमणिभिः नानाप्रकार... श्रीनिवासः शोभागृहं लसन्नि-
त्यन्वयः ॥

१०१। पुनः प्रकारान्तरेण प्रोत्साहयन्नाह। पीतैरिति। हे मित्र शैलः मया निर्दिष्टो मलयः तं प्राप्तं त्वां भवन्तं पूजयेत्पूजां कुर्य्यात् लिङ्। केन प्रकारेण .... ....इत्याकांक्षायामाह । पञ्चोपचारपूजाप्रकारं विषदयति। गन्धोदयो निवेद्यान्ता षञ्चोपचारिका इति वचनात् चन्दनानां हरिचन्दनानां पीतैः पीतवर्णैः पक्वामगन्धि हरिचन्दनं पीतवर्णं भवतीत्यवगन्तव्यम् । शीतलैः। किं च अतनुसुखदैः अतनूनि अनल्पानि बहूनीति यावत्। यानि सुखानि तानि ददतीति तादृग्भिः। तनु काये त्वचि स्त्रीस्यात्रिष्वल्पे विरले कृश इति मेदिनी। यद्वा अतनोरनङ्गस्य सम्बधीनी यानि भवन्तीति वा तैः रसोघैः द्रवनिकरैः। शृङ्गाराद्यो विशेषे गुणे रागे द्रवे रस इत्यमरः। सौरभ्याढ्यैः सुरभैरिदं सौरभ्यं सुगन्धमत्त-त्समपन्नैः। ·· मनोहर इति च। वलिसमुचितैः वलये पूजायैः समुचितैः योग्यैः। करोपहारयोःपुंसि वलि प्राण्यङ्गजे स्त्रीयामित्यमरः। पुन्नमन्दारपुष्पैः ... .. । "पञ्चैते देवतरवः मन्दारपारिजातकः। सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनमिति च। दावेदग्धैः दावेन वनाग्निना दग्ध पुष्पै.... .... दवः प्रमथिते। अगुरुनिकरैरगुरुणा कृष्णागुरुणां निकरैः करणैः। धुतैर्दीपैर्मणिभिः रत्नैः दीपैश्च दीपेश्च.... परिणतैः नवफलभरैर्नूतनफलातिशयैः एतत्प्रकरेण त्वां पूजयेदित्यन्वय ॥

१०२। तत्रेति। हे मित्र। तत्र मलयगिरै आसीनं स्थितमगस्त्यं त्वं नमस्येः वन्दन कुर्य्याः विधौ लिङ् कीदृशं ज्वलितदहनज्वालया ज्वलितस्य संजातज्वालस्य दहनस्य अनलस्य तुल्यभासं समानात्विषं··· ···इति। किं च जलनिधिपिवं पिवतीति पिव ... जलनिधेः पिवस्तादृशं किं च कुम्भजन्मानं कुम्भज्जन्म यस्य तादृशं किं च लोपामुद्रापतिं लोपामुद्रानाम्न्यः निजपत्न्याः पतिं कान्तं.... .... सादृश्य यस्य तादृशं किं च वेदवेदाङ्गचुञ्चुं वेदानां ऋचादानां षडङ्गानां चुञ्चुं वित्तं तेन वि·तश्चुञ्चप् चणापाविति चुञ्चुच् प्रत्ययः प्रत्थयोः··· ···वानिति सिद्धान्त-कौमुदी.... ....। किं च कारुण्याब्धिं करुणासमुद्रं किं च वन्दनार्हं नमस्यं.... ....विशेषणविशिष्टं अगस्त्यं नमस्येरित्यन्वयः ॥

१०३। पुनः प्रकारान्तरेण मलयं वर्णयति। उतुङ्गेति। हे मित्र तद्भूभृत — ....इतरगिरिवरभूमिभ्य उत्कर्षतो वर्त्तते। या गिरिभूः उतुङ्गश्रीलकुचभरतः उत्कृष्टा श्री शोभा तादृशा लकुचा लिकुचवृक्षा यत्र तेषां भरतः... ... लकुचो लिकुचो...रित्यमरः अतिशयो भर इति च। एतस्माद्धेतोः। उल्लसच्चन्दनेन। उल्लसन् विराजमानः स चासौ चन्दनश्चेति तादृशाव... ....वृक्षेण। विटपीपादपस्तरुरिति च जातावेकवचनं तैः करणभूतैः। आमोददाने आमोदस्य हर्षस्त दाने वितरेण। वदान्या बहुप्रदा। स्युर्वदान्यस्थूललक्षादानशौण्डा बहुप्रद इति च। श्रीमद्भावं श्री विद्यते इति श्रीमान् तस्य भावस्ततां लक्ष्मीवन्त्तां शोभामिति यावत्। वहति धारयति किं च स्पष्टं प्रकाशं यथा तथा अधरं न धरायाः तादृशं ललितं सुन्दरं, विक्षतं विभिः पक्षिभिः क्षतं दष्टं, विः पक्षि नभसो.... ....इति च। विम्वफल विम्वं फलं विम्विकायाः प्रतिविम्वे च मण्डल इति शाश्वतः। धारयन्ती विभ्रती किं च मालतीमालया गणिकाः यूथिकाः मालत्यः जात्यस्तासां मालत्या श्रेण्या। अढ्या सम्पन्ना गणिका.... ...एतद्विशेषणविशिष्टा गिरिभूर्जयतीत्यन्वयः। अन्यत्र गणिका वेश्या जयति। इतरत्रिलोकी गणिकाभ्य उत्कर्षेण वर्त्तते। कीदृशी तद्भू ···तासां... ...उत्तुङ्ग श्रीलकुचभरतः उत्तुङ्गा उत्कृष्टा या श्री शोभा तां लाति आददातीति तादृक्.... ...स्त्रियामिति च। एत्कारणद्वयेन तरूणां मोददाने वदान्या। तरूणानां यूनां आमोदः प्रीतिस्तस्य दाने विषये वदान्या। किं च। मालतीमालयाढ्या मालत्या मालतीकुसुमस्रजा। द्विहीन प्रसवे सर्वं हरितक्यादयः स्त्रियामित्यतः। मालत्या कुसुमं मालतीत्यवगन्तव्यम्।

१०४। गमनान्तरकृत्यं प्रपञ्चयति। तस्मिन्निति। हे मित्र तस्मिंस्तस्मिन् तत्र तत्र स्वकामं निजमनोरथं कांक्षन् वाञ्छन् विचरन् सन् अतः शर्वरी तुर्य्ययामे शर्वर्य्याः रजन्याः तुर्य्यश्चतुथ. य यामः प्रहरः तस्मिन् रात्रिचतुर्थप्रहर इत्यर्थः।··· ···याः राक्षस्य. तासां संहति निचये निकरे निद्राकान्ते निद्रया... ·· न क्रामन्ते... .. गोचरः दृष्टिविषयः स्या भवेः प्रार्थनायां लिङ्।

१०५। गत्वेति। तर्हि साधो सुभग पयोमुक् पय··· ···मूर्त्तिं तनुं ललितां रुचिरां कृत्वा विधाय जालमार्गे गवाक्षपथे प्रविश्य जालं समूह आनीय गवाक्षारकावणीत्यमरः··· ···सुन्दरे समगुणवती समास्तुल्या ये गुणास्ते विद्यन्तेऽस्यामिति तादृशी त्वया भवता... ....वचनैरिति वक्ष्यमाणक्रमेण वाच्या॥

१०६। वक्ष्यमाणक्रमेणेत्युक्तं तत्प्रकारमेव प्रपञ्चयन् श्रोतृजनाभिमुखीकरणाय... ....अनिष्टशङ्कानिरास सूचितः। त्वां भवतीं जनकतनयां अत्र जनकशब्दस्तत्र ...ोपात्तः। जनानां लोकानां... .. जना एव जनकाः स्वार्थे कः। तनया सुता यस्यास्तादृशीं लोकमातरमित्यर्थः। तनु.... .. । पुत्रा.... ....जनक पिता इत्यमरः। मां पुन. कथं वेदमीत्याकांक्षायामाह। धात्रीतनूजा धात्री क्षितिरेव धात्री माता तस्यास्तन्वा जातां तादृशीं सीतां वोच्चि··· ···सीतास्वरूपेण.... .... त्यभिप्रायः। तर्हि लक्ष्मीरत्रागत्य कथं स्थितेत्याकांक्षायामाह। कारागारे वन्दीगृहे त्रिदशरिपुणा त्रिदशानां देवानां रिपुः शत्रुस्तादृशा रावणेनेति शेषः। दैवगत्या विधिप्रचारेण... .. म...कामेन रावणेन निरुद्धेत्यर्थः। एवं यदि त्वं क इत्याशङ्कायामाह। मामङ्क . ....विधि जानीयाः। तव सन्तापं हरिष्यामीत्यर्थः। तदा त्वं सन्तापहारी चेदावयोः कः सम्बन्ध इत्यत्राह। त्वत् प्रियतम... .... तादृशः तव.... ...सश्च सखा तम्। राजाहस्सखिभ्यष्टच्। दुर्गमस्थले कथं प्रविष्टव्यमित्यत्राह। कामरूपं कामो वाञ्छारूपं विग्रहो यस्य तादृशं वाञ्छाधीनविग्रहमित्यर्थः। एवं यदि केन प्रेषित इत्यत्राह। रघुकुलपतेरागतं रघुवश ... .. रामचन्द्रात् दूत्येन दूतत्वेन दूतकम.. ...आर्षावृत्तिः। अस्मिन् त्वत्समीपे आगतं प्राप्तं च मां विद्धीति सर्वत्रान्वयः। विधौ लोट्॥

१०७। पृच्छतीति।··· ···सुशीले अबले। सोऽय.... ....प्रियतमः दैवतः विधिवशात् वियुक्तां विश्लिष्टां कुशलं क्षेमं पृच्छति मङ्गलपृच्छां करोति। यद्वा देवानामिदं दैवं... दैववशात् प्रियतमवियोगो न भवेदिति.... ... भवेदिति बुद्ध्वा दैवतः वियुक्तामित्युक्तम्। विच्छेदकालीनप्रश्नं करोतीत्यर्थः। कुशलं पृच्छति चेत् मम प्राणनाथः कथमास्त इत्युः.... .. अनु पश्चाज्जातस्तादृशा भ्रात्रा लक्ष्मणेन सौमित्रिणा साकं समं.... ....कुशली कुशलमस्यास्तीति तादृक्। आस्त इति शेष.। ननु हे देवि परं केवलं त्वयि भवत्यां रक्षसा रावणेन। आनीतायां स्वगृहप्रापितायां सत्यां माल्यवत्पर्वतस्थः माल्यवन्नामा पर्वतस्तत्स्थः सन्। त्वद्वृत्तान्तं तव वार्त्तां वार्त्ता प्रवृत्तिवृत्तान्तमित्यमरः। कलयितुमना ज्ञातुमिच्छुः तुं काम मनोसरपीति अनुस्वार.... ....प्रेषितवानिति शेषः।

१०८। एवमिति। हे देव हे घन । देवो....राशि घने नृप··· ···भवति। एवं उक्तप्रकारेण वदति कथयति सति बाला मत्प्रियतमा प्राणानसून् कथमपि

सति बाला मत्प्रियतमा प्राणानसून् कथमपि कृत्वा नृपतितनया सा उष्णैरशीतैः बाष्पैर्लोतकैः विकलनयने आविलनेत्रे द्राक् द्रुतं करेण हस्तेन प्रमृज्य प्रोञ्छ्य जीवातुं जीव.... ...संमुखी भूय संमुखो भूत्वा पश्येत् विधौ लङ् ॥

१०६। आनन्दातिशयद्योतनाय द्रागित्युक्तमित्यवगन्तव्यम्। ... .... संमुखीभवनानन्तरं हे प्रेयः... ....प्रियः प्रेयस्तस्य सम्बुद्धौ। हे प्रियः अतिप्रियमित्र गीः कौशल्या प्रणिहितधियां गिरां वाचां कौशल्यं चातुरी .... ....तादृशा.... ... अग्रणी मुख्यः। अतएव इङ्गिशज्ञ इङ्गिते आकारे ज्ञः पण्डितः। आकारस्त्विङ्ग इङ्गित इत्यमरः। अङ्गनामूर्द्धमण्याः अङ्गनानां कामिनीनां मूर्द्धा मस्तकं तस्य मणी रत्नं तादृश्या। तस्याः मम प्रेयस्याः चित्तं चेतः कलयन् वर्णे वर्णे वर्णे वर्णे अमृतमधुरिमोद्गारिवाग्वैभवेन अमृतस्य सुधायाः या मधुरिमा माधुरी तमुद्गातुं शीलमस्य तादृक् यत् वाग्वैभवं वचनप्राभवं तेन। भूयः पुनः निभृतनिभृतं भाषितुं प्रक्रमेथाः आरभेथाः ॥

११०। पुनस्तत्प्रकारं विस्तारयन्नाह। रक्ष इति। ननु अये धरणितनये भूपुत्रि। रघुकुलपतेः रघूणां कुलं वंशस्तस्य पतेर्नायकस्य पूते पवित्रे दूते सन्देशहरे। स्यात्सन्देशहरो दूत इत्यमरः। मयि। रक्षोबुद्ध्या... ... मनीषया। अविश्वासिनी। विश्वासः विश्रम्भः अस्या अस्तीति विश्वासिनी न तथा तादृशी। मा भूः न भव। समौ विश्रम्भविश्वासावित्यमरः सत्यं विद्धि तथ्यं जानीहि। ननु। पूरियं मायावीराक्षससंकटा तथ्यातथ्यनिश्चयं कथमहं जानीयामित्याकांक्षायामाह। ... ...अयं... ....श्रीरघुनाथः तत् त्वां सभिज्ञानं अभिज्ञानं अभिज्ञानेन चिह्नेन सहितं अवदत् अकथयत्। तत्सकलं वाचिकं सन्देशवचनं मम पदसमुच्चयात् अवधेहि अवधानं .. .. ॥

१११। पुनस्तत्प्रकारं प्रथयति। हत्वेति। हे जनकतनये। जानकि। लक्ष्मीकल्पे च। कितवतिलकं कितवानां मायावतां तिलकः प्रभुः.... ....मारीचं हत्वा सानुजः सलक्ष्मणः अहं पर्णशालां पत्रकुटीं गत्वा शून्यां त्वया विरहितां अपश्यमकलयम्। शून्यपर्णशाला दर्शनानन्तरं त्वं किं कृतवानित्याकाङ्क्षायामाह। प्राणानिति। हा कष्टं आकुलितहृदयः सञ्जाताकुलचित्त सन्नहं। ..... प्रवास

गन्तुं उद्यतानुद्युक्तान् जवितरानतिशयेन जविनः प्राणामून्। बाणानिव शरानिव जवितरानित्यर्थः। निरोद्धुं संरोधं कर्त्तुं दैवादेव विधेरेव। न तु मदायत्ततयेति भावः शक्तः समर्थः आसमभवम्॥

११२। पुनस्तदनन्तरकृत्यमाह। पद्मे ति। हे वरतनु वरा श्रेष्ठाः तनूः शरीरं यस्यास्तादृशी तस्याः सम्बुद्धौ हे वरतनु। दीर्घान्तत्वान्न गुणः पद्मसद्मं पद्मायाः लक्ष्म्या सती साध्वी मा शोभा यस्यास्तादृशी.... ....त्वां भवतीं प्रतितरुलतागुल्म भूभृन्निकुञ्जं तरवश्च लताश्च गुल्माश्च भूभृतश्च निकुञ्जाश्च तरुलतागुल्मभूभृन्निकुञ्जां तेषु। प्रतितरुलतागुल्मभूभृन्निकुञ्जं अव्ययं विभक्त्यादिना यथार्थ-वीप्सायामव्ययीभाव।... किंचिद् दूरे निकटप्राये दृक्पथस्य दृशोः.... पन्थाः मार्गः दृक्पथः तस्य अतिथिमभ्यागतं अशुगौघं आशुगानामिव.... .. मोघं अकरवं दृष्टवानस्मीत्यर्थः.... ....॥

११३। भूय इति। हे भो जलद। ... .. हेहे भो भो इत्यमरः। भूयः पुनः तस्मात् भग्नरथशिर--दर्शनस्थानात्। कतिपय··· ···गच्छता मया अग्रे पुरतः भूभृच्छिखरसदृशः भूभृतः पर्वतस्य शिखरं शृङ्गं तेन सदृशः समानः। कुटोऽस्त्रीशिखरं शृङ्गमिति च। पक्षिराजः पक्षिणां पततां राजा पक्षिराजः। जटायुः जटायुर्नामा पक्षच्छेदात्.... .. कर्त्तनात्। अधिकं बहु रुधिरं रक्तं वक्त्रात् मुखात्। प्रोद्वमन् उद्गिरन् पौत्रं पितुरिदं मित्रं सखायं सुकृतितिलकः सुकृतिनां पुण्यवतां तिलकः भूषणं दूरात् अदर्शि दृष्टः॥

११४। स इति। सः अयं मत्पितुर्मित्रं जटायुः विज्ञप्रकरतिलकः पण्डितप्रकरः प्रवरः नेत्रयुग्माक्षियुगलं युग्मं तु युगलं युगमिति च भ्रामयन् घूर्णयन् प्रियसखसुतं प्रियसखानां दशरथमहाराजपादानां सुतं मां.... ... राम राम इति उदीर्य्य आमन्त्र्य रावणाख्या रावण इति आख्या अभिधानं यस्य तादृक्। आख्याह्वे अभिधानं च। रक्षोऽधीशः। अधिकश्चासौ शरश्चेति अधीशः रक्षसामधीशः··· ···द्रुतं स्यन्दने.... ...दक्षिणाशां दक्षिणां दिशं कृतगुरुजवः कृत विहितः गुरुजवः वरवेगो येन तादृक् सन् जगाम गतः। इति उचे इति उक्तवान्॥

११५। एवमिति भ्रान्तचित्ते । भ्रान्तं मिथ्यामतियुक्तं चित्तं यस्य तादृशि। भ्रान्तमिथ्यामतिर्भ्रम इत्यमरः मुमूर्षौ मत्तुमिच्छुर्मुमूर्षु तादृशि। तस्मिन् जटायुषि । विकलं असमग्रं यथा तथा । एवमुक्तप्रकारेण वदति सति। अहं भूयश्च पुनश्च संभ्रमेण त्वरमाणेन त्रिपुरजयिना जयोऽस्यास्तीति जयी। त्रिपुरे जयी त्रिपुरजयी तादृशा। अनुजेन पश्चाद्जातेन भ्राता लक्ष्मणेन सौमित्रिणा साकं सह। किमिति किमिति त्वरायां द्विरुक्तिः। पृच्छंश्चापि। प्रश्नं कुर्वन्नपि पुनः पुनः। निश्चयं.... ....॥

११६। इत्थमिति। हे सुतनु। इत्थंभूतः पूर्वोक्तविशेषणविशिष्टः अहं अतः जटायुषो दर्शनस्थानात् । भ्रान्तवत् वातुलवत् भ्रात्रा साकं लक्ष्मणेन सह। तत्र तत्र कानने कानने च.... विचरन् ऋष्यमूके ऋष्यमूकाख्ये गिरिवरे। चतुर्भिमन्त्रीमुख्यैः... ...युक्तं सहितं वीरं सुग्रीवाख्यं सुग्रीवनामानं कपिकुलरतिं प्लवगवलराजं अपश्यम् अलभम्। हि निश्चयम् ॥

११७। .... त्रिपुरजयिना। जयोऽस्यास्तीति तादृशा त्रिभुवनजय··· ...भीतं भीतः। दिशि प्रतिदिशं चिरं बहुकालं भ्रामं भ्रामं भ्रान्त्या उवास वसति स्म। .... ....हनुमता हनुमदाख्येन सुग्रीवसचिवेन दूतेन सन्देशहरणे। मैत्रीं मित्रस्य इयं मैत्री तादृशीं सौहृदं पुरस्कृत्य.... .... ॥

११८। ··· ···पद्मे कमले इव आयते दीर्घे अक्षिणी नेत्रे यस्यास्तादृशी तस्य। सम्बुद्धौ। हे फुल्लपद्मायताक्षि अथो । शरण·· ···कपिकुलपतिं सुग्रीवं मित्रभावेन सुहृत्तया स्वीकृत्य अङ्गीकृत्य तद्वात्सल्यात्.... ....कपिमात्राणामिति भावः। बाहुवीर्य्यात् बाह्वोः भुजयोः वीर्य्य... ...आश्रयं.... ...॥

११९। .... ...भवत्या त्वया तस्मिन् ऋष्यमूके पतिताः विसृष्टाः। परमुत्कृष्टं निचोलं प्रच्छदपटं लब्ध्वा··· ॥

१२०। ततः किं कृतमित्याकांक्षायामाह । हत्वेति । हे नृपसुते । नृन् पातीति नृपः.... ...शक्रस्य महेन्द्रस्य पुत्रं वालिनं वालिनामानं वीरं कपिकुलपतिं सुग्रीवं अभ्यषिञ्चं अभिषेकमकरवम् । अभिषेककरणानन्तरं गुणगणनिधिः

... ...कर्त्तुं शीलमस्य तादृक् सन् आस्ते वर्त्तते। एतेन महोपकारिणो मम ॥

१२१। मनोरियं मानवी मनुसम्बन्धिनी प्रसूतिः सन्ततिः कर्त्री। दृप्ता दर्पयुक्ता निजो... ....तथापि एष मान्निर्दिष्टः सुग्रीवः। मम साहाय्यं सहायतां कर्त्तुं विधातुं.... ...हर्त्तुं अपनेतुं धृतमतेः कृतबुद्धेः ममेत्यन्वयः ॥

१२२। ... ...स्वस्य आत्मनः प्रियसहचरी......प्रेमोद्रेकात् प्रेम्णः हार्दस्य उद्रेकात् अतिरेकात् मीलिताक्षः मिलि··· ॥

१२३। काक्षायामाह। कान्तेति। कामी कामः वाचिककथनाभिलाषः अस्यास्तीति काम........। किं च स्मेरपद्मायताक्षः। स्मेरं विकशितं यत्पद्मं तत्कल्पा आयता अक्षिणी यस्य तादृशः··· ···। तादृशं नवजलधरं नूतनजलधारिणं पश्यन् कलयन्। उग्रबाधाकुलितहृदयः.... ...व्यथादुःखमिति च। मेघसादृश्यं घनं लक्ष्यीकृत्य। सकरुणं करुणेन स्मारं स्मारं स्मृत्वा स्मृत्वा भूयः पुनः ववित स्म.. ... भूतार्थे लट्। प्रस्तावनां कृत्वावभाष इत्यर्थः। किलशब्दस्तु वार्त्तायां सम्भव्य-नुशयार्थयोरिति च ॥

१२४। वक्ति स्मेत्युक्तं तत्प्रकारं प्रपञ्चयति। आचक्षीथा इति। हे जलद। आदौ प्रथमतः मृगाक्ष्याः। मृगस्य अक्षिणी इव अक्षिणी यस्यास्तादृश्याः मत्प्रियतमायाः। ते मयानुभूतौ अक्षिवैसारिणौ अक्षिणी एव वैसारिणौ मीनौ। मीनौ वैसारिणोऽण्डज इति च। कुशलस्य मङ्गलस्य प्रश्नं पृच्छा आचक्षीथाः। कीदृशौ। नेत्रामोदात् नेतुर्नायकस्य मम आमोदात् हर्षात्। आमोदं वितीर्य्येति ल्यबलोपे पञ्चमी। किं च। विशेषात् प्रणयवलितौ... ....त्वेन वलितौ प्रोज्जृम्भमाणौ। तादृशौ यौ नेत्रमीनौ। मे मम अङ्गे अवयवेषु। जातावेक-वचनम्। अङ्गं प्रतिकोऽवयवमित्यमरः। सरिति नद्यां। पुरा पूर्वस्मिन् काले सुखिनौ सुखमनयोरस्तीति तादृशौ.... ....अखेलतां क्रीडां चक्रतुः। सपदीदानीं तद्विच्छेदात् तस्याः सुखक्रीडायाः विच्छेदात् वियोगात् हेतोः विकलत्वं वैक्लव्यम् सम्प्राप्नुयातां लभेतां नु प्रश्ने। विधौ लिङ् ॥

१२५। वामे इति। हे सुभग।.... ...वामे सव्ये नयने। मे मम शस्य कल्याणस्य पृच्छा प्रश्नः कार्य्या भवतेति वाक्यशेषः पृच्छां कुर्य्याः। सच्छा-

रदमरसिजश्रीतुलाढ्ये सत् साधु शारदं..... ... यत्सरसिजं पद्मं तस्य श्री.शोभा तया आढ्ये सम्पन्ने यत् वामनयनं अमृतकलितया अमृतं पीयूषं तेन कलितया विराजमानया वृष्ट्या वर्षरूपिण्या दृष्ट्या दर्शनेन । दृष्टिर्दर्शननेत्रयोरिति च स्फुरत् सत् ... ....त्वां स्नापयेत् स्नानं करयेत् विधौ लिङ् । इव उत्प्रेक्षते । इष्टोपगमं इष्टस्य वाञ्छितस्य अपगमं प्राप्तिं विज्ञाय बुद्ध्वा उदयन्मोदत उदयन्नुद्गच्छन् यः मोदः हर्षस्तस्मात् नयननर्त्तनं करोति.... ...अभीष्टप्राप्तिं ज्ञात्वा नृत्यति तद्वत् प्रकृतेऽपीति बोद्धव्यम् ॥

१२६ । पुनः श्लोकद्वयेन मुखं वर्णयन् पृच्छति अब्जमिति । मृगादयाः मन्प्रियतमायाः । आस्य शारदं शरदि भवं अमलं स्वच्छं अब्जं पद्मं कुब्जं विकृताङ्गं··· ···भयेति शेषः मुखशोभादर्शनेन अब्जं शोभाहीनत्वात्कुब्जं जातमित्यर्थ । पर्वप्रथितशशिनं पर्वणि पूर्णिमायां प्रथितं प्रसिद्धं शशिनं विधुं गर्वसर्वस्वहीनं गर्वोऽभिमान एव सर्वस्वं सकलधनं तेन हीनं विहीनं कुर्वन् विदधत । किं च । दर्पकीये दर्पकसम्बन्धिनि । कन्दर्पो दर्पकोऽनङ्ग इति च । दर्पणे मुकुरे दर्पणे । मुकुरादर्शविति च । दास्यं दासभावं निदधत् ददत् । यस्य मुखस्य शोभां कवयितुं वर्णयितुं कवीन्द्राः.... ....नालं न समर्थाः । अलं भूषणपर्य्याप्त.... ...वाचकमिति च सालं सार... ....रलयोरैक्यम् । यथा यमकादौ भवेदैक्यं··· ... लरो ववोस्तथा इति कविकल्पलता । .... ....व्रजपते नन्दगोपस्य वारः बालः इति व्याख्या.... ···मित्यन्वयः ॥

१२७ । आपृच्छेथा इति । हे मित्र इति पूर्वेण सम्बन्धः । मृगादयाः मत्प्रियायाः तत् मुखं अनामयमारोग्यं आपृच्छेथाः पृच्छां कुर्य्याः । अनामयस्थादारोग्यमित्यमरः । अपि कथम् । पूर्वचरितं कथयामि । "ज्ञातुहेतुर्विवक्षाया-मप्यादि कथमव्ययम् । कथमादि तथाप्यन्तं यत्नगौरववादयो ।" पूर्वं पूर्वस्मिन् काले । मामकं मम इदं मामकं नेत्रद्वयं नयनयुगलं कर्त्तृ । अविरतं सन्ततं सन्ततमविरतानिशमित्यमरः । यत् मुखं प्रियावदनं विलोक्य निरीक्ष्य हर्षोत्कर्षात् प्रमोदातिरेकात् मुत्प्रीति प्रमोदो हर्ष प्रमोदामोदसम्मदा इति च । अमृतनिकरे सुधासन्दोहे । सन्दोहनिकरव्रजा इति च । अमज्जत् मग्नमभवत् । अद्य इदानीं तस्य मुखविलोकनस्य अन्यथात्वे वैपरीत्ये .. ....तथापि एतत् मामकं नेत्रद्वयं यत् यस्मात् कारणात् । अये विषण्णोऽस्मि । अये क्रोधो विषादे च

सम्भ्रमे स्मरणेऽपि चेति मेदिनी। अमृतनिचये जलनिकरे अमज्जत् मग्नं खलु निश्चितम्। अहो अद्भुतम्।…… आश्चर्यजनकमिति…. इत्यवगन्तव्यम्। अमृतं यज्ञशेषे स्यात्पीयूषे सलिलेऽमृत इति मेदिनी। विरोधाभासोऽलङ्कारः॥

१२८। …….पुनस्तन्मुखं साधु यथा तथा पृच्छेः प्रश्नं कुर्याः। प्राक् यथा ……पृच्छामीत्याकांक्षायामाह। मम नयनयुगली। पूर्वं पूर्वस्मिन् काले यस्मिन् मुखे सस्पृहं स्पृहया सहितं यथा तथा इच्छाकांक्षास्पृहेत्यमरः। खेलति स्म क्रीडां चकार। सम्प्रतीदानीं एषा मम नयनयुगली स्वस्य कर्मणः कार्यस्य विनिमय-परिवृत्तिं कृत्वा भूयो भूयः पुनः मां हि मामेव शश्वद् सदा पुनः सहार्थयोः शश्व-दिति च। कथं केन प्रकारेण दुनोति परितापयति॥

१२९। पुनर्भङ्ग्यन्तरेण प्रतीकान्तरं वर्णयति। तामिति। किं च। हे सुभग तां मयानुभूतां एकवेणीं अद्वितीयवेणीं अवश्यं कुशलं क्षेमं पृच्छ। प्रार्थनायां लोट्। या वेणी मे मम कामितरतमुदां कामितानि वाञ्छितानि रतानि तेषां मुदां प्रीतीनां विश्राणनेन सकचग्रहचुम्बनादिदानेन विश्राणनं वितरणं स्पर्शनं प्रतिपादनमित्यमरः अथ कार्त्स्न्ये न एका मुख्या। एके मुख्यान्यकेवला इति च। …… प्रवरस्य जनकस्य…. …पश्चाद्बद्धा पश्चात् पृष्ठतः बद्धां यदपि मया। पुष्पैः कुसुमैः पुरस्कृत्य अग्रे कृत्वा पुरस्कारं कृत्वा च प्रीतेः प्रमोदस्य पात्रं भाजनं व्यरचि रचिता। पात्रं तु भाजने योग्ये पात्रं… ….चेष्यत इति अजयः। अनेन … …परस्परप्रीतिभूमा सूचितः…. ….॥

१३०। … …वर्णयति। आपृच्छेथा इति। अथवेति पृच्छानन्तरं हे सखे मूर्त्तिः तनुः। स्त्रियोमूर्त्तिस्तनुस्तनुरित्यमरः प्रीतिपूर्व…. …आपृच्छेथाः। दुह्याचित्यादिना सर्वत्र द्विकर्मकत्वम् प्रार्थनायां लोट्। किं च। ननु निश्चितं गाढं दृढं आलिङ्गनं च परिरम्भं ब्रूयाः। गाढबाढदृढानि च। चकारादन्यदपि ब्रूया इत्यन्वयः तदपि विषदयति। विश्लेषस्य… ….आलिङ्गनस्य अतनुतरभिया अतिशयभयेन। या मूर्त्तिः अङ्गरागैः चन्दनादिलेपैः नालेपि न लिप्ता। सम्प्रति नौ आवयोरन्तरे मध्ये अन्तरमवकाशावधिपरिधानान्तर्द्धिभेद-तादर्थ्ये छिद्रात्मीयविना…. ….मध्येन्तरात्मनि चेति च। मध्येऽर्थे यथा। आवयो-रन्तरे जाता इति वन्द्यघटीये उदाहृतम्। नगदनदीपर्वता नगा वृक्षा नदाः शोणादयः

पुरुषनद्राः नद्यः कावेर्य्यादयः··· विन्ध्य . ....चेत्येते। आसन्। एतावद्दूरे त्वं स्थितेति ब्रूया इत्यन्वयः।

१३१। पुनः प्रकारान्तरेणाङ्गान्तरं वर्णयति। ताविति। अथो मूक्तिप्रच्छानन्तरं हे मित्र! राजपुत्र्या जानक्याः। तौ मयानुभूतौ वक्षोजौ........लक्ष्यीकृत्य मा मां यथेष्टमाश्लेषपूर्वं आलिङ्गनपूर्वकं मामकं क्षेमप्रश्नं कुशलप्रच्छां भवान् रचयतु। त्वं कुर्वित्यर्थ। हे सखे यौ वक्षोजौ गौरीदेवीहृदयसदनौ गौरी गौराङ्गी देवी। तस्याः हृदयं वक्ष सदनं गृहं ययोस्तादृशौ हीनभूषौ हीना रिक्ता भूषा........तादृशौ। कान्तविरहादित्यवगन्तव्यम्। किं च। करसरसिजाभ्यां करावेव सरसिजे पद्मे ताभ्यां पूजार्हौ अर्चनयोग्यौ। किं च गाङ्गेयकान्तौ . ... स्वर्णं तद्वत्कान्तौ कमनीयौ। गाङ्गेयं भर्मकर्बुरमिति च। विशेषसामर्थ्याच्छब्दौ गम्यते। शिवौ कीदृशौ। गौरीदेवीहृदवसदनौ। गौरी पार्वती सा चासौ देवी सुरी चेति तादृशी तस्या हृदयं चित्तं सदनं ययोस्तादृशौ।........जयं गमावित्यर्थः। यौ अहीनभूषौ। अहीनां सर्पाणामीनः प्रभुः अनन्तः स एव भूषा हारो यतोस्तादृशौ। इनः प्रभौ च सूर्य्ये चेति च। करसरसिजाभ्यां। करावित्र ये सरसिजे पद्मे आभ्यां पूजार्हे। गाङ्गेय... ....जाह्नव्या इदं गाङ्गेयं कशब्दस्तलेशापात्तः। तादृक् यत्कं जलं तत्कान्ते मस्तकान्ते ययोस्तादृशौ। यद्वा। गाङ्गेयं यत्कं जलं तद्वद्दन्तौ रम्यौ। गङ्गाजलवच्छुभ्राविल्यर्थः यद्वा!। गाङ्गयकेन गङ्गाजलेन .... ॥

१३२। एवमुक्त्वा पुनः श्लोकद्वयेनाभिज्ञानं प्रकटयति दायादेयादिभिस्त्रिभि। हे मित्र! जनकनृपतेः जनकनाम्नो नरनाथस्य। दाया सुता। दायादो सुतबान्धवौ।........शीताः शीतः··· स्तादृशश्चन्द्रस्य जिताङ्ककाले जितमङ्क कालं येन तादृशि। भाले ललाटे। प्रणयरचितं प्रणयेन स्नेहेन रचितं... . तिलकं मम हृदि बक्षसि लग्नं सक्तं घमर्जै. जातैः जलै. खेदैः मग्नं लानं जातु कदाचित् ·· ···लघुत्विप्रमरं द्रुतमिति च। प्रोञ्छतं स्म सम्ममार्जि ॥

१३३। अपरमभिज्ञानं श्लोकद्वयेन प्रपञ्चयति। काक इत्यादिना। स प्रसिद्धः पाकप्रमथनसुतः.......केतुकरटोरिष्टबालपुष्ट सकृत्प्रजा इति च। चित्रकूटे चित्रकूटनाम्नि गिरीन्द्रे शैलराजे मांसार्थी मांसं कव्यं आश्चितुं शीलमस्य... ···रुहः··· नखोऽस्त्री नखरोऽस्त्रियामिति च। तदुरसिजौ तस्याः मत्प्रियायाः उर-

सिक्तौ स्तनौ दरायित्वा विदार्य्य मम मन्तो....अस्त्रं च तेन असौ ग्रस्तः कवलीभूतः सन्। लोकान् भूवनानि भ्राम्यन् भ्रमन् कुत्रापि कस्मिंश्चित् भुवनेऽपि शतशं शतशे.......॥

१३४। शरणमप्राप्य किं कृतवानित्याकांक्षायामाह। भ्राममिति। अग्निज्वालाजटिततनुना। अग्नेर्वह्नेः ज्वालाभिः शिखाभिः जटिला संस.... भुवननिचये भ्रामं भ्रामं यत्र यत्र काकः गच्छति तत्र शरस्तं विद्रावयेदेवेत्यर्थः। अ.... ....रक्षकाप्राप्त्यनन्तरं आगत्य........स्तस्मै एकं केवलं अक्षि नेत्रं वितीर्य्य दत्वा स्वायमीयान् प्राणानरक्षत् रक्षामकरोत्॥

१३५। एवंरूपेणाभिज्ञानद्वयमुक्त्वा पुनः......भ्रातेति वदन्ति स्म। 'भ्रातरिति सम्बोधनमवगन्तव्यम्। देदीप्यमाने....··कौ वर्णेन समं चर्णान् उज्ज्वर्णान् कार्णान् शरान् विदधत चेत्। हन्त खेदे। अहं मन्ये। जन्ये आयोधने। सहकुलं कुलेन सहितं........वमानायां भुवि भूमौ। कलङ्की अपवाद अस्यास्तीति कलङ्की। न वा स्यां किमु अभवमेव॥

१३६। चित्त इति। ....अहं जीवामि प्राणान् धारयामि ध्रुवं निश्चयं एवं नो चेत्। उक्तक्रमवैपरीत्ये सति। परमपुरुषार्थं परम...... न्वभूतां जीवातुं जीवनौषधरूपां तां मम प्राणप्रियसहचरीं विना क्षणमणि निमेषमपि जीवितुं...... लोके जने नृणां नराणां वृत्तिर्वर्तनं कत्री। कार्य्यानुरोधात् कार्य्याणामुपरोधात् भवति समर्था भवति॥

१३७। नामप्राक्त ... राजपुत्रि एतस्मात् मया उच्यमानात्। अभिज्ञानतः चिह्नतः हेतोः। मां कुशलिनं क्षेमशालिनं विदित्वा ज्ञात्वा परं केवलं ······असुचय······हे कल्याणि। इयं मदुदिता श्रीमता लक्ष्म्या अनपेता सा प्रसिद्धा गाथा सद्भिः पण्डितैर्गीता हि यस्मात्कारणात् जयति। सर्वगाथाभ्यः ······कस्मिंश्चित् कालेऽपि। सुदामानन्दमेति प्राप्नोति॥

१६८। भवतु नामा तं जीवितं······सहस्रैः। मर्कटो वानरः कीशो इति च। सख्या मित्रेण सुग्रीवेण भ्रात्रा अनुजेन लक्ष्मणेन······बन्धुपुत्रैः बन्धवः बान्धवाः पुत्राः सुतास्तैः समेतम्। रक्षोऽधीशां रक्षसामधीशं बह्निज्वालाजटिलतनुभिः। अमोघैरव्यर्थैः······सामीप्ये वर्त्तमाने विद्धीति भविष्यति लट्॥

१३९। आर्य्यस्येति। आर्य्यस्य अभ्यर्हितस्य आज्ञावलित······य्यनन्तर अयोध्यां गत्वा। अनुजननीबन्धुवर्गैः। अनु पश्चाज्जाता भरतादयः जनन्यः कौशल्यादयो मातरः······प्रियेषु प्रीतिकरेषु निष्कूटेषु गृहारामेषु। क्रीड़ाशैलेषु च। प्रमुदितहृदो······भूभुजां गृहारामास्तु निष्कूटाः इति चामरः।।

१४०। ······प्रासपूर्वं सामसान्त्वं यस्मिन् कर्मणि तद्यथा। वाक्चातुर्य्य प्रवचन सुधीः वाचां वचनानां चातुर्यं प्रावीण्यं तस्य प्रवचने······बन्धुप्रीत्या। बन्धौ मयि या प्रीतिः स्नेहस्तया सरसहृदयः। रसेन सह सरसं सरागं हृदयं चित्तं यस्य तादृक्······।।

१४१। एतेन किं कार्यं भविष्यतीत्याकांक्षायामाह। भुवीति। भुवि भूलोके स्फीतकीर्त्ति स्फीता प्रवला या...... प्रेम स एव भारस्तं······प्रेमस्नेह इति च। दहन्नुद्धरन् सन्। एतत् मया प्रार्थितं कार्यं कृत्वा विधाय······कार्यं विज्ञाप्य च निवेद्य च। हे जलमुक् जलानि मुञ्चतीति क्विप्।······विचर देशेषु चर इत्यर्थः। देशकालाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम् इति वचनात्······ विद्युतं कलत्रमिति शेषः। अङ्के कृत्य उत्सङ्गे कृत्वा अङ्के कृत्येति सप्तम्यां अलुक्। सम्भृता उपचिता श्रीः शोभा यस्य······मिति सारस्वतालङ्कारदर्शनात्। नायकेच्छानुरूपोऽयमाशीर्वादः।।

१४२। एवं काव्योपसंहारं वर्णयितुं······प्रकारान्तरेण प्रपञ्चयति। एवमिति। एवमुक्तप्रकारेण रामे श्रीरघुनाथे कथयति घने सप्रपञ्चादतिस······ गामाकाशमाविश्य याति गच्छति सति। करुणरसवत्प्रेमहर्षाश्रुदारा करुण रसवत् कारुण्यरससंयुतं यत्प्रेम······भरितविकसत्पुण्डरीकेक्षणश्रीः। भरिते पूरिते विकसत्पुण्डरीके। फुल्लसिताम्भोजे इव······मनुते स्म।

१४३। श्रीराधाकृष्णचरणार्पणमस्तु। इति श्रीविरहातुर श्रीरघुनाथ-वचनम्।······मङ्गले कर्त्तव्ये सति श्रीरघुनाथहर्षरूपं मङ्गलं वर्णयित्वा पुनर्द-वतावाचकश्रीशब्दं प्रयुज्य समासोक्तिप्रयोगेन······सत्वोत्कर्षेण वर्त्तते एव। जयत्यनेन नमस्कार आक्षिप्यत इति काव्यप्रकाशकारवचनात् नमस्कारो लक्ष्यते। ······राम रमणीयः विशेषणसामर्थ्यात् श्री भीमधमदेवनृपतिर्जयति। स इति क

इत्याकांक्षायामाह । य:······तिलको भूषणं भास्वान् देदीप्यमान: यो वंश: गङ्ग-नृपसिंहकुलं तत्प्रभवा ये शुभ··· ···श्रीरामचन्द्रे वला विद्या वसति···कामयन्त इति भाव: । रागोऽनुरागो मात्सर्य्य इत्यमर: किं च य:··· ···सीता··· ···यस्य तादृक् । दुष्टराक्षासवधात् सन्तुष्टा देवा: श्रीरामयश: प्रबन्धादिभिर्गायन्तीत्यर्थ: अन्यत्र सीताजीवत्रिप्रतगतया······पण्डितै: गीतकीर्त्ति: पूर्ववत् । सीता-लाङ्गलपद्धति: ज्ञातृचान्द्रीसुरा बुधा इति चामर: । किं च । य: अलं अरं अतिशयेन······। अन्यत्र । कौशल्ये कुशलत्वे चतुरत्वे अहिता दत्ता मतिर्येन तादृक् वाक्कौशलप्रणिहितमतिरित्यर्थ: ।······चारका: विशिष्ट इत्यर्थ: । अन्यत्र सुमन्त्रेषु उत्तमविचारेषु अवधाने यस्य तादृक् सुविचार्य्य कार्य्यकारी······राज-चिह्नेन विशिष्ट: । आनन्दकारी जनानामिति शेष: । एवं विशिष्ट: सोऽयं जयतीत्यर्थ: ।

१४४ । वर्णनीये सति अप्रस्तुतवाजप्रतीतेरित्यवगन्तव्यम् । स भीमधर्म-देव: जयतीत्युक्तम् । स क इत्याह ।···जन लक्ष्मणं रामानुजं वेति जानाति । लक्ष्मणकल्पं तं रतं च कीदृशम् । कौशल्येशे कौशल्यं चतुरत्वं तस्मिन् इश: शिव इव । उच्चै:······रमणी रामेति च । अन्यत्र रामामोदं रामस्य श्रीरघु-नाथस्य दर्शनात् आमोदं वर्द्धयन्तम् । किं च । परममुत्कृष्टं······निजमातु: अनुरागं वर्द्धयन्तं किं च भीमाभिख्यं भीमस्य महादेवस्य अभिख्या शोभेव शोभा यस्य······भीम इति च । एवं विशेषणविशिष्टमित्यन्वय: ॥

१४५ । पुन: प्रकारान्तरेण वर्णनं करोति । राजेति ।······स इति क इत्याकांक्षायामाह । य: राजा राजोत्तंसं राज्ञां नृपणानुत्तंसं शिरोभूषणं स··· ···अतएव एकान्त. अद्वितीय सुन्दर: । गाङ्गेयं भर्मकर्वुरमिति च । कनक-राशि सुन्दर इत्यर्थ: । किं च लोकैकेश······नास्तैनुत स्तुत: । किं च गिरावाप्त-सिद्धि । गिरावचनेन अवाप्ता सिद्धिर्येन तादृक् । सत्यवाक्य इत्यन्वय: ।······ राजकन्याविहारीत्यर्थ: । एवं विशिष्ट इत्यन्वय: । अथ च स भीमदेव: महा-देव: जयतीर्थ: । राजोत्तंस. राजा······चन्द्रशेखर इत्यर्थ: । किं च वृषवर-गति: । श्रेष्ठगमनं यस्य तादृक् । वृषवाहन इत्यर्थ: । भूतिराशे भस्मपुञ्जस्य निधानं निधि: । भूतिर्भस्मनिसम्पदीत्यमर: । किं च गाङ्गेयौघा तनुतररुचि श्रीनिवासैककान्त: । गङ्गाया इदं गाङ्गेयं य: ओघ: तस्य अतनुतरा अनल्पतरा:

या: रुचयस्तासां या श्रीस्तस्या ······स: अत:······लोकैकेश: लोकानां भुवनानां एक: मुख्य इश: प्रभु: । किं च । बुधजननुत. बुधजनै: पण्डितजनै नुत: य । गिरौ कैलासे अवाप्तसिद्धि: । किं च भूभृद्भुवि पर्वतपुत्र्यां पार्वत्यां सद्गति: एवं विशिष्ट······विजयते इत्यन्वय: ॥

१४६ । पुन: प्रकारान्तरेण राजानं प्रस्तौति । तुङ्गादिति । य: क्ष्मातलेन्दु: भूतलचन्द्र: राजा तुङ्गात्सकलनृपकुलश्रेष्ठव गङ्गान्वयजलनिधे: गङ्गान्वय: गङ्गवश: एव जलनिधि: समुद्र:······वंशादित्यर्थ: अजनि जात: । चन्द्रस्तु सिन्धुजात एव । स······कीदृगीत्याकांक्षायामाह । श्रीमान् वेशरचना शोभा राजसम्पत् वाणी लक्ष्मीश्च एता विद्यन्ते अस्य श्रीमान् । अन्यत्र शोभावान् । किं च रामानुज······पदं पादगति······तादृक् । अथच जनस्य पदे लोके गति सञ्चारो यस्य । अष्टमसयादिभाधजादित्यवगन्तव्यम् । अन्यत्र रामानुजस्य विष्णो: पदे गति: सञ्चारो यस्य तादृक्······निधानं निधि: । अन्यत्र षोड़शकलानां निधि: कला तु षोड़शो भाग इति च । किं च । निश्चितं क्षत्राणां ऋक्षाणां कुलपति: नक्षत्रेश इत्यर्थ: । किं च गोकुलामोददायी गोकुलयस्य हकचयस्य आमोदं हर्षं दातुं आमोद: प्रसाद: हर्षस्तद्दायी । अथ च गोकुलै रश्मिसधैये आमोदस्तद्-दायी । गौनदित्ये वलीवर्दे क्रतुभेद ऋषिभद्रयो: । स्त्रीतु स्यान्नभारत्यां भूमौ च सुरभावपि । नृस्त्रियो स्वर्गवज्राम्बुरश्मिदृग्वाण......कि च । धृतकाविरुचि: धृता कवौ एतत्काव्य कवितरुरुचि: प्रीति येन तादृक् । अन्यत्र धृता के सू विरुचिविशिष्टप्रीतिर्येन । मित्रत्वादित भाव: । मित्राणि सूर्याच्छशिभौमजीवा: सूर्येन्दुजा······येषु भास्कर इति च । कि च य: राजेशमौलि: राज्ञां नृपाणामीशा. प्रभवस्तेषां मौलि: शेखर. । महाराजाधिराजइत्यर्थ: । अन्यत्र य: राजा चन्द्र: ईशमौलि ईशस्य ईश्वरस्य मौलि: ।······धर्म: धर्मनाम्ना महाराज: विजयत इति पूर्वेण सम्बन्ध: ॥

१४७ । पुन: प्रकारान्तरेण वर्णयति । पद्मेति । स: अयं नृपति: । अत्र अस्माद्धेतो: शूर: सन् समुदयं अभ्युदयं इत.... ..चिरभोग्या वसुन्धरा जाता । न तु भाग्यभोग्येति । अथ च शूर: सूर्यकल्प: उदयप्राप्तश्च । अत इति उक्तं कुत इत्याकांक्षायामाह पद्मामोदाव विलसन्न किमु शोभमान एव...... प्रसादादयं विराजमान इत्यर्थ: । किं च छायायां कान्तया कान्तधामा कमनीयमूर्त्ति: किं न

किं तु सुन्दरमूर्त्तिरेव। छायासूर्यप्रियाकान्तिरित्यमरः धामदेहगृहरश्मीनिति च।
किं च लोके गुरुसखीतां गुरूणां महतां सखितां व्यनक्ति प्रकटयति। प्रायो न किं
तु मैत्री प्रकटयत्येवेत्यर्थः। किं च विपथवलतः विरुद्धः पन्थाः विपथम्। पथः
संख्याव्ययादेरिति नपुंसकत्वम्। वाटः पथश्च मार्गश्चेत्यदन्तोऽपि त्रिकाण्डशेषे
पठ्यते। तस्मिन् वलतः प्रवर्त्तितः......राज्ञ नृपस्य श्रीविनाशं सम्पन्नाशं
विद्यते करोति। किं च। अभ्रान्तवृत्तिः। अभ्रान्ता भ्रमरहिता वृत्तिवर्त्तनं
यस्य तादृकेत्यत इति अन्वयः। सूर्यपक्षे। शूरः सूर्यं समुदयं इत। सूर्यवाचि
शूरशब्दस्तलव्यादिरपि। केचित्कुसु····· शुरः भासः कुमारा इति वासवदत्ता-
प्रयोगदर्शनात्। स कीदृक्। पद्मामोदात् पद्मानां कमलनामामोदात् गन्धं विधाय ल्यब्
लोपे पञ्चमी। विलसन् किं च छायाया निजप्रियया सह गम्यमानेऽपि सहार्थे
तृतीया। यद्वा छायाया विशिष्टः विशेषणे तृतीया। कान्तः······सखीतां जीवेन
मैत्रीं प्रकटयत्येव। मित्राणि सूर्य्याच्छशिभौमजीवा इत्यत इति बोद्धव्यम्। किं
च विपथवलतः वीनां पक्षिणां पन्थाः··· ···वीनां··· ···वृत्तिवर्त्तनं यस्य तादृक्।
इत्येते भेकविशेषत······शूरत्वमुचितम्। प्रस्तुताप्रस्तुतश्लेषः॥

१४८। पुनः प्रकारान्तरेण स्तौति। भूलोकेति। इह लोके जनः यं
भूलोकेशं राजानं भारतीशं·· ·· यद्वा भारत्यां वाग्मितायां ईशं समर्थं वक्ति
वदति। ....... शिवसमं वदति। किं च सा प्रसिद्धा भारती सरस्वती यस्य राज्ञः
वक्त्राम्भोजे मुखपद्मे वसति सर्वदा सरस्वती वासभूतवदनाम्भोजमित्यर्थः। किं
च राम · जातावेकवचनम् यं नृपं प्रेक्ष्य प्रेम्णा स्नेहेन समभिलसति सम्यङ्मनोरथं
करोति सर्वरामामनोरथास्पदमूर्त्तिमित्यर्थः। किं च सा प्रसिद्धा भारती भारताख्या
कथा श्रुता सती भक्तिश्रद्धादिभिः श्रवणविषयीकृता सती। यस्मै······कामं
मनोरथं वितरति······शं शिवं च। सोऽयं राजा विजयते इति पूर्वेणान्वयः॥

१४९। पुनः प्रकारान्तरेण प्रस्तौति। सुहृन्नृपा इति। महीमहेन्द्रस्य
भूतलशक्रस्य। सुहृन्नृपाः मित्रानराधिपाः ये वैरिनराधिपा शत्रुभूपाः। तथा
तद्वत् इतरे अन्ये च अवनीपाः भूपाः याचकाः अर्थिनश्चेत्येते। भूतले चत्वारोऽपि
कटकादिभूषिता वभूवः। अस्य भूशक्रस्य........लोकोत्तरा अहो आश्चर्य्यम्। इति
ये जना केन प्रकारेण.......समदृष्टिता इत्याकांक्षायामाह। यद्यपि एकपदविशेषणे
न साम्यं तथापि अर्थवादाद्भेदं प्रपञ्चयति। ........एतस्मिन् महाराजे मैत्रीं ..

....भजमाना सन्तः सुखेन स्व स्व पुरेषु स्थिता इत्यर्थः। वैरिनराधिपा कटका-दिभूषिताः। कटक एव ...... देशान्तरेषु भिक्षुकत्वेन बम्भ्रम्यमाणा अकिञ्चनत्वेन कटक परिधाय वर्त्तन्ते स्मेत्यर्थः........न सुहृदः नापि शत्रवः ये ते अन्ये नृपाः। एतद्राजाधिराजस्य पराक्रमभयात् पर्वतकन्दरादिषु वासं चक्रुरित्यर्थः। ....... भवन्ति स्म। एतन्नृपशिरोभूषामणेः दानादिना सर्वे याचका सर्वालङ्कारालंकृताः सन्तः सुखेन स्थिता इत्यर्थः॥

१५०। .......मन्त्र्यादीनां परमसुहृत् परश्चासौ सुहृच्चेति परमसुहृत्। उत्कृष्टमित्रं सत्। अयं शुभावहविधिं ददाति तेभ्य इति शेषः। ......अतः अजन्तः। तथा च ...... नयवतायवतानिधिगुह्यकाधिपरमै........रोधो एषामस्तीति वैरिणः ते च ते भूपालानुगाश्च तेषां पंक्तेः राजेः परं केवलं असुहृत्। असून प्राणान् हन्तीति असुहृत्........। किं च योऽयं राजन्यकुलपतिः। दुर्जनानां दुष्टलोकानां निकाये संघे परमुत्कृष्टं यथा तथा असुहृत् न सुहृत् अमित्रं .... ....। परमुत्कृष्टं सुशोभनं हृदयं चित्तं यस्य तादृशं विदन्ति जानन्ति।

—)०(—

## तृतीयपरिशिष्टम्

—टिप्पणी—

१।　काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये।
सद्यः परनिर्वृत्तये कान्तासम्मिततयोपदेशयुजे॥

इत्यालङ्कारिकवचनप्रामाण्यात् काव्यस्यानेकश्रेयःसाधनता। तथा चतुर्वर्गफलावाप्तिः सुखादल्पधियामपि। काव्यादेव यशस्तेनेति काव्यालापांश्च वर्जयेदिति निषेधस्य। ......कवेर्वाणी हरिनामाङ्किता यदि। सा वाणी सकला श्रेया विफला...... ॥

काव्यालापाश्च ये केचिद्गीतकान्यखिलानिच।
शब्दमूर्त्तिधरस्यैते विष्णोरंशा महात्मनः॥

इति विष्णुपुराणवचनात् विष्णोरंशतां च। ननु काव्यमेतादृग्भवतु......नाम कार्य्यं प्रयोजनं प्रवर्त्तत......अत्रोच्यते...मङ्गलादिनि भवन्तीति मङ्गलकारिणाम्। विन्धपरिसमाप्तिसम्प्रदायाविछेदलक्षणफलसाधनत्वाच्च आशीर्नमस्क्रिया वस्तुनिर्देशो......मिति आशीराद्यन्यतमस्य प्रबन्धमुखलक्षणं वा काव्यफल...... वीजभूतं भगवतः श्रीरघुनाथस्य अब्ददर्शनरूपमादौ रामशब्दप्रयोगपूर्वकं वस्तु निर्दिशन् कृष्णरायश्रीचन्दन नामा कबि......प्रयोक्तव्ये सति श्रीपदगुरुत्वयात्मकः गणभूभिदेवताको......शुभगणवर्ण प्रयोगेऽपि नियमत्वेन कविकण्ठपाशो कथितः वर्णं गणं च काव्यस्य मुखे कुर्य्यात्सुशोभनम्। रमयति मोदयति रूपमस्य रामः। आयुधं तु......सुरतेच्छामुत्पादयतीति कामः स्मरस्तदायुधशतै गोवलीबर्द न्यायेन माल्यवतः गिरेरेकदेशसमभूभागे सानुसम,गिरेः क्षितिरिति नाममाला। रमन्ते योगिनोऽनन्ते सत्यानन्दे चिदात्मनि इति रामपदेनासौ......भिधीयते। ......
"देवतावाचकाः शब्दा ये च शब्दादिवाचका। ते सर्वे नैव निन्द्या स्युर्लिखितोगणतोऽपि वा।" अत स्वेष्टदेवतारूपरामशब्दप्रयोगः। काव्यादिपदादौ साधीयान्। अलं विस्तरेण। राम इति॥

२ । ...दानं रुचिमन्ये(२)त्यागे । अमानं अमितं नवजलभरं अन्तर्दधानं इति । कुवलयरुचिः भूवलयस्य रुचिर्यस्मिन् । कुवलयानां रुचिरिव रुचिर्यस्य च......राज्ञां च श्रीभराणां शोभातिशायिनाम् ॥

३ । ...क्षणमात्रात् सुमनसां मालतीनां मोदं हर्षं विकसन् इति यावत् । ईक्षणेन सुमनसां मोदमानन्दं दातुं शीलमस्य यस्तावन्नेघ. स चन्द्रसमीपे चरतीति ध्वनि । गजराजोऽपि महाराजनिकटे चरति ॥

४ । .. वृष्टेः सकाशात् भुवनस्य जगत. सुखदे । यद्यपि प्रेषितानां प्रवसतां कीनाशो यम इत्युक्ते तत्सदृशे लक्षणा यथा गौर्वाहिकः गौसदृशो... .. ॥

५ । हा विषादाशुगर्क्तिषु । संज्ञां छेतनाम् ॥

६ । कथमादि तथाप्यन्तं यत्नगौरववादयो. । महता प्रयत्नेन ॥

७ । नीलोत्पलदलरुचिरिन्दीवरकान्ति माल्यवच्छैलचारी त्वं चाहं च । एवमेतैः समानधर्मसौसादृश्यं समञ्जसं भवति । ......तद्गतभूयो धर्मवत्वं त्वमपि न भोगः आकाशगामी । तद्भिन्नत्वे सति । जातं जन्म । पुष्कलेन डलयोरैक्यात् पुष्करेण अन्वयेन वंशेन प्रसितं ख्यातं मे मया ख्यातम् । तस्मिन् मेघे गता ये भूयांसो धर्माः श्यामत्वादिधर्मा. । सुरदरधनु शक्रचापः । ... जलसमूहं बाणगणं तमेताभ्यामुत्सुकाभ्यां तृतीया चेति सप्तम्यां तृतीया । आवत्त-पुष्करवंशे ते जन्म ख्यातं सत् मया ज्ञातम् । अतस्त्वं महान् । श्रेयान् श्रेष्ठश्च पुष्कलः स्यादिति ॥

८ । विच्छेदः यथा विजयते तथा त्वय्यपि चातकमयूरादिपक्षियोगः न प्रभवति किं प्रभवत्येव । एतत् त्वं यथार्थं च निश्चयतां वचनवाहुल्येन......मरणवाचकं ...... । मयेत्यर्थ च मेऽव्ययम् । अन्यत्र मे जन्म पुष्कलश्चासौ ईनायन्वश्चेति ....... भवति इति यत् तत्सदृशोः समानधर्ममिव नौ.......। अतस्त्वं मे मित्रं प्राणतुल्यं इति समञ्जसा ॥

९ । भर्त्ता दैवमिव....... ॥

१० । त्वं गर्भादिच्छायां मित्रभावादस्मिन् मल्लक्षणे जमे प्रसादं.......भवतु । भवच्छब्दयोगमध्यमपुरुपार्थे लोट् प्रथमपुरुषप्रयोग इत्यवगन्तव्यम् ॥

१३। तरस्वीत्वरितो वेगी प्रजवी जवनो जवः ॥

१६। जीवातुर्जीवनौषधम्। समुद्रस्य पारे पारे समुद्रम्। अन्त. प्रान्तान्तिके मध्ये ॥

२०। अधो भूवनपातालवलिसद्म रसातलम्। वार्त्ताप्रवृत्तिवृत्तान्तम् ॥

२५। वेशो वेश्यागृहेऽपि च। इति तालव्यान्ते रभसः विशत्प्रवेशान इति ....... वेशाद्धेतोः नयनसुखदा दृशोः सुखदा ॥

२६। भल्लौ भालुकवाणौ स्वः इति धरणिः ।

२७। जेतृमात्रे जैत्रद्वयं जयशीले तु। जेता जिष्णुश्च जीवनः। अथो जैत्रे असिततलिनश्रीततेः जेतृणी ॥

३१। ........पिष्टप्तोदिष्टवरिष्टस्यविष्ठ वंहिष्ठाः। विम्बफले विम्बिकायाः प्रतिविम्बे ॥

३२। गर्वो नाम कूटे ...पर्व... वलादिभिः। इष्टार्थविषय प्राप्ते जायते नीचयोग उति आचार्य्यः ॥

३३। कम्बुः शङ्खः स्त्रियां पुंसि शम्बूके वलये गणे। वैणी वीणासम्बन्धिनी वाणी प्रसरति........वाणी पञ्चमस्वरः ॥

३८। चन्द्रश्चन्द्रकला कान्ते मस्तकान्ते ययोः तादृशौ। हे रुचिर सुन्दर। अतएव सममाभिः सह वर्त्तते सम्बद्धो सम तां प्रसिद्धां कलधौतसम्बन्धिनीं रुचिं कान्तिं विभ्राणौ ....ययोस्तादृशौ। अनन्तः शेषः हारो यस्यास्तादृशौ। श्रीभि श्रीगिरलजन्यशोभा तत्सद्भावे सत्तायां न विद्यते उपमा सादृश्यं ययोस्तादृशतरौ। गिरौ कैलासे इशोन्नमन्तौ ऐश्वर्य्यसमुन्नतौ चेत्यन्वयः। वक्षोजौ जयतः सर्वोत्कर्षेण वर्त्तते। चन्द्रकान्तौ चन्द्रेण कर्पूरेण कान्तौ। हे रुचिर समतां समानतां कालधौतीं कनकसम्बन्धिनीं रुचं च विभ्राणौ। सामुद्रिके विषमकुचत्वं निन्दितं भवति। तथा "रक्ताक्षी रक्तकेशी प्रविरलरसना कामनादीर्घदेहा-सङ्कलुविषमकुच—।" अतोऽसमकुचवत्त्वं प्रशस्तं भवति। अनुपमतरौ अतुलतरौ। यः नितम्ब भास्वान् रविः स कथं शुभ्रांशुकः स्यात्। शुभ्रांशुरेव शुभ्रांशुकः स्वार्थे कः अहं नो वेद्मि अहह आश्चर्य्यम् अहहेत्यद्भुते खेदे। अन्त विरोधपरिहारे तु य. भास्वान् देदीप्यमानः स शुभ्रमुद्दीप्तं अंशुकं वस्त्रं यस्मिन् तादृशं कथं नो

स्यात् ।.... ...यः सौम्य सुन्दरः स कथं गुरुः श्रेष्ठः गुरुः बृहस्पः न स्यात् समजनि ........हेतुं जाने। सौम्यः सोमसुतः बुधः स कथं गुरुजीवः स्यात्। अस्मिन् हेतु कारणं न कलयामि। .......कृतवान्.... यत्र चित्रं किं नु प्रश्नं। श्रीनिवासः श्रीभगवान् चक्रे सुदर्शने मैत्रीं चक्रे कृतवान् ॥

६४। कोका च कोकश्च तयोः।

६५। वियोगोभयातुरयोर्कोकयोर्दर्शनात् प्रज्वलवियोगाग्निना।

८६। रमणोच्छ्रौ। गर्भागारं वासगृहम्।

८३। स्त्रीणां तु मण्डलीनृत्यं विदुर्हल्लीशकं बुधा।

८५। कीर्त्ति किं भूतां लिङ्गविपरिणामेन आप्तं लोकहितां द्यवि स्वर्गे प्राप्त भ्रमणि विलासेन आगतं अतएव अभ्रमातङ्गेन ऐरावतेन यान्तं मरुद्भिः वायुभिः मुच्यमानं मरुतौ पवना···तादृशां सहस्रं दशशती तेन पूजितं चेत्येतैर्विशेषणाविशिष्ट तनुमिति श्लेषः।

८७। हे क्षुद्रेतर क्षुद्रेभ्य इतर बहुलग्रहणात् समासः। त्वां कृष्णं च कीदृशं दिवि गगने प्राप्तं······पीतमाच्छादितमिति यावत्······यत्र पीताम्बरं सुगमं अनन्तस्य नभसः···यस्य तादृशं अभिख्या नाम शोभयोरित्युभयत्रामर। अनन्त इति नाम यस्य वा। भुवनानां जलानां सदनं वसतिं भुवनानां जगतां··· जगतां निवासत्वात्। कम्बूना गजानां चक्रः गणमस्य श्रिया शोभया आढ्यं सुसम्पन्नं······शङ्खः पाञ्चजन्यश्चक्रं सुदर्शनं दीव्यन्तो क्रीडन्तो स्वरुचि·· विलसन्ती शोभमाना चञ्चला विद्युत् यस्य तादृशं अन्यत्र···विलसन्तो चञ्चला कमला यस्याः तादृशं······स्मृतिर्जायते इत्यर्थः।

६५। सुशोभनं यदम्बराच्छादनं नभः पिधानं तेन अन्तां रम्यां सर्वतो व्यापित्वादिति भावः। तमवसितरम्ये समाप्तवन्तं इष्यते इति नूत्नैः नूतनै पद्मरागादिभि रुचिरकटकां कटकं वलये सानो इति ललितसानुं······शिखरं शैलवृक्षाग्रकक्षापुलककोटिपु। पक्वदाडिमबीजाभमाणिक्यसकलेशु इत्याभिधानात् भ्राजमाना······द्विजानां पक्षिणां आलयः राजयः यस्यां माद्यन्तो ये पञ्चाननाः सिंहास्तेषां गतिः······॥

९६।  शशभृता चन्द्रेण उपलक्षितां राजन् मौलिः किरीटं यस्याः। एके मुख्या ते दन्ताः निकुञ्जास्तेषां प्रसूतिः प्रसवो यस्यां……कमनीयेन मुखेन।

९६।  जनः नवदर्शनेन आमोदभाक् सन् काममत्यर्थं पश्यतु। त्वां किंभूतं सीरपाणिप्रमोदं लाङ्गलधराणामानन्दं विस्तारयन्तं सवरस्य जलस्य दानेन वितरणेन अतिशय……रुचिगृहं द्युतिसदनं अतएव……। क्लीबं सम्वरं नीरबौद्धव्रतविशेषयो विशेषे पुंसि……हरिणस्य चेति दन्त्यादो रभसः सम्वरो ……शम्वरं सलिलं स्मृतमिति तालव्यादावजयः। ……कामं कीदृशं सीरपाणे रामस्य आनन्दं विस्तारयतं भ्रातृव्यत्वात्……सुखकरं वा संवरस्य……च्छेद-दावखण्डेन विशिष्टं विशेषणे तृतीया। विष्णोः निजतातस्य पदे पादे या रुचय-स्तासां वसतिं रुक्मिणीरूपिण्या लक्ष्म्या भवतीति तं एतादृग्विधं त्वां काममनुतां ……।

१०१।  पक्वाभ्रगन्धहरिचन्दनं पीतवर्णं भवति।

१०३।  ……..स चासौ भृभृत् चेति तस्य भूः पर्वतैकदेशभूमिर्जयति सर्वो-त्कर्षेण वर्त्तते। या गिरिभूमिः उत्तुङ्गश्रियो लकुचा वृक्षविशेषाः। लकुचो लिकुचो उन्दुरित्यमरः। तद्भरतः अतिशयात् कमनीयचन्दनेन तरुणा…….वेकवचनं तैः मोददाने हर्षदाने वदान्य श्रीमद्भावं लक्ष्मीवत्तां शोभा।……. अधरं पिक्षतं पक्षिभिः दष्टं विम्बं विम्बफलं धारयन्ती विभ्रती। विम्बं फले विम्बिकायाः प्रतिविम्बे च मण्डले इति। यूथिकामालत्य. जात्यस्तासां मालया श्रेण्या आढ्या….॥

—O—

# चतुर्थपरिशिष्टम्

## दूतकाव्यानुक्रमणिका

| क्रमसंख्या | काव्यनामानि | कवयः |
|---|---|---|
| १। | अनिलदूतम् | रामदयालुतर्करत्नः |
| २। | अमरसन्देशः | गुरुदेव आपटेः |
| ३। | इन्दुदूतम् | कृष्णचन्द्रः, विनयप्रभः, विनयविजयगणि |
| ४। | उद्धवदूतम् | रूपग स्वामी (1490-1563 A.D), माधवः |
| ५। | उद्धव सन्देशः | रूपगोस्वामी, अज्ञातनामापरः |
| ६ | कपिदूतम् | अज्ञातनामा |
| ७। | कीरदूतम् | रामगोपालः, वरदाचार्य्यः |
| ८। | कृष्णदूतम् | नृसिंहः (18th Century A.D) |
| ९। | कोक सन्देशः | नृसिंहः, विष्णुराटः |
| १०। | कोकिल सन्देशः | वरदाचार्य्यः (1316-1415 A.D) भेङ्कटाचार्य्यः, गुणवर्द्धनः, उद्दण्डः, नरसिंहः |
| ११। | कोकिलदूतम् | हरिदासः |
| १२। | गरुड़सन्देशः | वेल्लमुकुन्दरामरायः (1815-1913 A.D) |
| १३। | चन्द्रदूतम् | कृष्णतर्कालङ्कारः, जम्बुः, विनयप्रभः |
| १४। | चकोरसन्देशः | पेरुसुरी (18th Century A.D) वासुदेवः भेङ्कटकविः |
| १५। | चातक सन्देशः | अज्ञातनामा |
| १६। | चेतोदूतम् | अज्ञातनामा |
| १७। | जैनमेघदूतम् | आचार्य्यमेरुतुङ्गः |
| १८। | तुलसीदूतम् | वैद्यनाथः |
| १९। | दात्यूहसन्देशः | नारायणः |
| २०। | नेमिदूतम् | विक्रम कविः |
| २१। | पदाङ्कदूतम् | भोलानाथः, कृष्णसार्वभौमः |

| क्रमसंख्या | काव्यनामानि | कवयः |
|---|---|---|
| २२ । | पद्मदूतम् | सिद्धनाथ-विद्यावागीशः |
| २३ । | पवनदूतम् | वादिचन्द्र, धोयीकविः |
| २४ । | पादपदूतम् | गोपेन्द्रनाथ-गोस्वामी |
| २५ । | पान्थदूतम् | भोलानाथः |
| २६ । | पिकदूतम् | रुद्रन्यायपञ्चाननः, अज्ञातनामापरः |
| २७ । | पिकसन्देशः | रङ्गानाथाचार्य्यः, नरसिंहाचार्य्य |
| २८ । | बुद्धिसन्देशः | सुब्रह्मण्यसूरिः |
| २९ । | भक्तिदूतम् | कालिप्रसादः |
| ३० । | भृङ्गदूतम् | शतवधानकविः, चक्रपाणिदासः |
| ३१ । | भृङ्गसन्देशः | वासुदेवकविः |
| ३२ । | भ्रमरदूतम् | रुद्रन्यायपञ्चाननः |
| ३३ । | भ्रमरसन्देशः | महालिङ्ग शास्त्री |
| ३४ । | मधुकरदूतम् | केन्ताड़िपट्टिः |
| ३५ । | मधुरोष्ठसन्देशः | अज्ञातनामा |
| ३६ । | मनोदूतम् | व्रजनाथः, रामारामः, विष्णुदासः |
| ३७ । | मयूरसन्देशः | अज्ञातनामा, रङ्गाचार्यः, श्रीनिवासाचार्य |
| ३८ । | मयूरदूतम् | धुरन्धरमिश्रः |
| ३९ । | मलयदूतम् | प्रबोधमिश्रः |
| ४० । | मानससन्देशः | वीरराघवः |
| ४१ । | मारुतसन्देशः | अज्ञातनामा |
| ४२ । | मृगदूतम् | वनमालीकरः |
| ४३ । | मेघदूतम् | कालिदासः |
| ४४ । | मेघप्रतिसन्देशः | मन्दिकलरामशास्त्री कविरत्नः |
| ४५ । | रथाङ्गदूतम् | अज्ञातनामा |
| ४६ । | वकदूतम् | म० अजितनाथः |
| ४७ । | वातदूतम् | कृष्णनाथन्यायपञ्चाननः |
| ४८ । | विप्रसन्देशः | कोचुन्नितम्पुरन् (1858-1964 A.D) |

| क्रमसंख्या | काव्यनामानि | कवय. |
| --- | --- | --- |
| ४९। | शिवदूतम् | नारायणशास्त्री |
| ५०। | शीलदूतम् | चारित्रसुन्दरमणि: |
| ५१। | शुकसन्देश: | लक्ष्मीदास:, रङ्गाचार्य:, नम्बुद्री |
| ५२। | श्येनदूतम् | नारायणशास्त्री |
| ५३। | सुभगसन्देश: | नारायण:, लक्ष्मणसूरी, (1859- 9 9 A.D) |
| ५४। | सिद्धदूतम् | अवधूतराम: |
| ५५। | सुरभिसन्देश: | विजयराघवाचार्य: |
| ५६। | सूर्यदूतम् | दयानिधिमिश्र: |
| ५७। | स्वप्नदूतम् | प्रबोधामिश्र: |
| ५८। | हंससन्देश: | वेदान्तदेशिक:, रूपगोस्वामी, भट्टवामन:, भेङ्कटेश पूर्णसरस्वती, अज्ञातनामानौ |
| ५९। | हंसदूतम् | रघुनाथदास: |
| ६०। | हनुमत्सन्देश: | मधुसूदनतर्कवाचस्पति: (1818.A.D) |
| ६१। | हनुमद् दूतम् | नित्यानन्दशास्त्री |
| ६२। | हरिणसन्देश: | वरदाचार्य्य: |
| ६३। | हृदयदूतम् | भट्टहरि: |

# पञ्चमपरिशिष्टम्

## द्वादशपत्रावशेषः

या वै रात्रैरखिलवयसां तुन्दिलां सानुरागं
दात्यूहानामुरुतरगिरां सन्ततिं शृण्वती सा ।
क्रीडावापितटपरिसरे कोकयोर्विप्रयोगं
सायं चेयं सकरुणहृदा वीक्ष्य शश्वद् नोति ।। ६४ ।।

:():

## श्लोकानुक्रमणिका

